# श्री महावीर-सौरभम्

रचयिता:—

आचार्य मधुकर शास्त्री; साहित्य-रत्नाकर:, आशुकवि:

प्रकाशक:—

जैन श्वेताम्बर पेढी कोटा (राज०)

पुस्तकम्— श्री महावीर-सौरभम

 

रचयिता.— आचार्य-मधुकर-शास्त्री

 

प्रकाशक.— जैन श्वेताम्बर पेढी
कोटा-६ (राज0)

 

मूल्यम्— ८-०० अष्टौ रूप्यकाणि.

प्रथमावृत्ति १९७७





मुद्रक. श्री उमेद प्रेस रामपुरा, कोटा-६ (राज0)

**चतुर्थः सर्गः**


१—स एवाऽभून्महावीर. [विविधा घटना ] २७

२—भोगेष्वनासक्तता २६

[क] (i) श्वेताम्बर मतानुसारेण गार्हस्थ्य-प्रवेश ३४

(ii) परिवार-स्नेहाऽऽग्रह ४१

[ख] दिगम्बर-परम्पराऽनुसारेण महावीरस्य विवाह एव नाऽभूत् ४८

३—चित्ते प्रगाढ-वैराग्यम् ४६


**पञ्चमः सर्गः**


१—गेहान्महाभिनिष्क्रम. ५१

२—खण्डवन प्रति ५३

३—हरिकेशी हरिप्रियः ५३

४—साधना प्रति ५५

५—पूर्वमात्म-विशोधनम् ५६

६—कठोरे साधना-पथे ५७


**षष्ठः सर्गः**


१—शत्रावपिसुधा-वर्षणम् ६२

२—अन्तिम-वस्त्र-प्रदानम् ६५

३—आत्मावलम्बन प्रति ७१


**सप्तमः सर्गः**


१—यक्ष-पश्चात्ताप ७४

२—गरलादमृत प्रति ७६


**अष्टमः सर्गः**


१—आदर्शस्सख्यभावस्य ८१

२—गोशालक-प्राणरक्षा ८५


**नवमः सर्ग.**


१—चन्दनवाला-मुक्तिनो ८६

दशमः सर्गः

१—केवल-ज्ञान-सम्प्राप्तिः ९७

एकादशः सर्गः

१—जनस्य सेवाऽस्ति जिनस्य सेवा १०५

द्वादशः सर्गः

१—सत्यस्य प्रखरो वक्ता ११०

त्रयोदशः सर्गः

१—निर्वाणम् ११३
२—उपसहार· ११६

चतुर्दशः सर्गः

[उपदेशपरम्परा–१] ११८

१—जगद् दृश्यमदृश्यञ्च १२१
२—ईश्वर आत्मा च परमात्मा च १२२
३—आत्मोत्थानस्य भूमिका १२३
४—विचार-मूल-आचारः १२४
५—अनेकान्त-सिद्धान्तः १२५
६—स्याद्वाद १२६

पञ्चदशः सर्गः

[उपदेशपरम्परा–२] १२७

१—सप्तभङ्गी-व्यवहृति. १२७
२—जीवनाऽऽचार-सहिता [अणुव्रतानि] १२८
३—गुणव्रतानि, शिक्षाव्रतानि च १३१
४—निवृत्तिमूला प्रवृत्ति १३२

षोडशः सर्गः

[उपदेशपरम्परा–३]

१—जैन-धर्म-परम्परा १३४

१— दिगम्बरसाधुः १३४
[क] दिगम्बरसाधो मूलगुणा १३५
[ख] 'तेरापन्थी' 'बोसपन्थी'-प्रभेद १३६
[ग] 'तारणपन्थ' इति प्रभेद १३६
२— श्वेताम्बर. १३७
[क] चतुर्दशोपकरणानि १३७
[ख] एतद्भेद द्वयम् १३८
[ग] स्थानकवासो १३८
[घ] तेरापन्थी च १३९
२—मूलाऽऽचार-व्यवहारयोस्साम्यम् १४०
३—शाकाहारमात्र-परत्वम् १४१
४—पर्वोत्सव-परम्परा १४१
[क] पर्युषण-पर्व १४२
[ख] दोपावलिः १४३
[ग] अन्यानि पर्वाणि १४३
५—युग-सन्दर्भे भगवतो महावीरस्य चिन्तनम् १४३

परिशिष्टम्—

१— श्रमणवाणी [सस्कृतानुवादरूपा] १४७
२— किञ्चिज्ज्ञातव्यध्यातव्यञ्च १५३

शुद्धिपत्रम्

# प्राक्कथनम्

जैनदर्शनं हि नाम बौद्धदर्शनात् पूर्वतनमामनन्ति सुधियः। जैनधर्मस्य खल्वतिप्राचीनं नामधेयं 'निगण्ठ' इति निर्ग्रन्थशब्दस्य पालीभाषायां रूपान्तरितोऽपभ्रंशः प्रतीयते। भवबन्धस्य ग्रन्थिनिर्गतत्वान्निर्ग्रन्थ इति व्यपदिश्यते महावीरस्य चोपाधित्वेनोन्नीयते। तत्र रागद्वेषविजयिनः सर्वज्ञकल्पास्त्रैलोक्यपूजिता यथास्थितार्थवादिनः सिद्धपुरुषा 'अर्हन्' — पदेन संज्ञायन्ते तत्प्रचारितत्वाद्दर्शनमप्येतदार्हतमुच्यते। जैनधर्मस्यान्तिमतीर्थङ्करस्य वर्धमानाभिधस्य रागद्वेषादिरिपूणां विजयाद् 'जिन' इत्युपाधिः। जिनेन प्रचारितत्वादिदं जैनदर्शनमित्युच्यते। जैनसिद्धान्तप्रचारकास्तीर्थङ्करा इत्युच्यन्ते। तीर्थङ्करेष्वाद्यः खलु ऋषभदेवः। पार्श्वनाथ-महावीरौ चान्तिमौ। तदितरदेकविंशतितीर्थङ्कराणां वर्णनं समासत एवोपलभ्यते। सर्वङ्कषकालचक्रवशाद्विलुप्तप्रायं जैनधर्मं तत्रभवान् ऋषभदेव एव पुनरुज्जीवयामास। चतुर्विंशतितीर्थङ्कराणां नामधेयानि जन्मस्थानानि चेह "महावीरसौरभम्" ऽऽख्ये ग्रन्थे सक्रममुपवर्णितानि निभालनीयानि।

### भगवान् महावीरः—

एष किल मगध-नृपतेः सिद्धार्थस्याऽऽत्मजो महाराज्ञी "त्रिशला" चाऽस्य जननी। असौ हि जैनधर्मस्यान्तिमस्तीर्थङ्करो वर्धमानाभिधानः पार्श्वनाथस्य सार्धशतकद्वयान्ते कुण्डलपुराऽऽख्ये ग्रामे जन्मपरिग्रहञ्चकार।

"ख्रिस्ताब्दात् प्राक् नवनवत्यधिके शतपञ्चके।
चक्रमे चैत्रशुक्लस्य त्रयोदश्यां शुभे दिने॥"

"श्रीमान् सुधान्तः श्रमणो महात्मा, पवित्रकुक्षे 'त्रिशला'-ख्यमातुः।
आख्यातमहावीर महानवद्य जनुर्धरिण्यां भगवान् कृपालुः॥"

[ श्री महावीरसौरभम्, पृ०सं० १५-१६ ]

अथ स एवाय महात्मा सार्द्धद्वादशाब्दावधी प्रोग्रे तपसि निमग्न ऋजुकूलानदीतीरे शालवृक्षाधोभागे ध्यानचिन्तनसंल्लीनस्तपश्चर्यासयमभ्या मनोमल प्रक्षाल्य प्राप्तकेवल-दर्शन. 'केवलज्ञानवान्'-"अर्हन्"-"केवलज्ञानी"-"जिन"—"तीर्थङ्करे"— तिपदवीमारुरोहाऽऽदिशच्च "स्याद्वाद"-गुम्फिता जनकल्याणकारिणीमनेकान्तविचारधाराम् । सोऽयमहावीरस्य दिव्य. सन्देशोऽद्यापि भूतले जागर्ति ।

## जैन-साहित्यम्—

जैनसाहित्य हि नामातिविशद वर्तते । आचारग्रन्थापेक्षया प्रमाण-ग्रन्थानां बाहुल्यमत्राऽऽस्ते । एते च दर्शनग्रन्था "आगमकाल"-"आरम्भकाल"-"मध्ययुग"-"अवान्तरयुग"--भेदाच्चतुर्षु कालविभागेषु विभक्तास्सन्ति ।

## दार्शनिकाः सिद्धान्ताः—

जीवः – जैनदर्शने जीवस्य चैतन्यवत्त्व निसर्गत एवाऽनन्तज्ञानविशिष्टत्वञ्च स्वीकृतम् । प्राक्तनकर्मावरणपिहितत्वेन जीव समावृतशुद्धरूपोऽवभासते, किन्तु सम्यक्चरित्राऽऽलम्बनेन स पुनः स्वशुद्धज्ञानस्वरूपता विन्दति, कवल्य सवज्ञताञ्च सुतरामवगाहते इति सार्वभौमो जैनसिद्धान्त ।

## ज्ञानस्य द्वैविध्यम्—

जैनशासने ज्ञान द्विविधम्-प्रत्यक्ष परोक्षञ्चेति । प्रत्यक्षपरोक्षयो. स्वरूपमत्र दर्शनान्तरेभ्य सर्वथा विलक्षणमस्ति । एषा आत्मसापेक्षज्ञानमेव प्रत्यक्ष, आत्मेतरेन्द्रियादिसापेक्षज्ञानञ्च परोक्षम । जैनदार्शनिका प्रत्यक्षानु-मानाऽऽगमाऽऽख्य प्रमाणत्रयमेवाङ्गीकुर्वन्ति ।

## स्याद्वादो जैनदर्शनञ्च—

स्याद्वादो हि नाम जैनदर्शनस्य प्रधानो वाद । पदार्था खल्वनेकधर्माण , तेषु परिपूर्ण सर्वधर्मसमन्वित ज्ञान, अनधिगतकैवल्यपद सर्वज्ञ सिद्धपुरुष विहाय सर्वसाधारणजनेर्दुरवापतया न शक्यसम्भवम्, इत्यतो हेतोस्ते सर्वसाधारणजने पदार्थस्यांशिक ज्ञानमेवाऽवाप्तु शक्यम् । तदांशिक ज्ञान "नय" इति पदेनाभिधीयते । "स्यात्" इति पदेनाऽत्र सशयितार्थसम्भवाऽर्थो निगद्यते ।

**नयवादः ( सप्तभङ्गीनयः )—**

जैनदर्शने नयवाद. सविशेषं स्थानमधिकरोति। दर्शनान्तरेषु परामर्शोऽन्वयव्यतिरेकरूपेण द्विविध एव गृह्यते, परं जैनदर्शने स एष सप्तप्रकारकः स्वीकृत, यो हि "सप्तभङ्गीनय" इति नाम्ना व्यदिश्यते। ग्रन्थेऽस्मिन् यथास्थल तत्स्वरूपमप्युपवर्णितमास्ते विद्वत्तल्लजेन ग्रन्थकारमहोदयेन।

अहिंसा.–जैनदर्शन किन कणे–कणे जीव–सत्तामुररीकरोति तदणावणौ निवसता जीवाना परिरक्षार्थमेवैष परमोदात्तोऽहिंसा-सिद्धान्तोऽङ्गीकृतो जैनदार्शनिकैरित्यवगम्यते। अनेकान्तवादोऽपि जैनदर्शनस्य परममाननीयो राद्धान्त। पदार्थाना मिथ. सम्बन्धज्ञानादृते तत्त्वज्ञानस्योदयोऽसम्भव–इत्यामनन्ति जैना.।

जैनदर्शनेनेश्वरस्य काऽपि सत्ता न स्वीकृता। यद्यपि "अर्हत्-सिद्धाना"–मीश्वरवच्छ्रद्धास्पदत्व जीवस्य तत्र स्वीकृतम्। तादृशकोटिं समधिरूढो भगवान्-महावीरश्चतुर्विंशतितमो युगपुरुषस्तीर्थङ्कर 'श्रीमहावीरसौरभा"–भिधे ग्रन्थेऽस्मिन् आशुकविना, विपश्चिद्वरेण श्रीमता मधुकरशास्त्रिणा साहित्यरत्नाकरेणाऽतीव मनोहारिण्या प्रसादगुणभूयिष्ठया देववाण्या सस्तुत इति सर्वथाभिनन्दनीयोऽय सुरसरस्वतीसमुपासक आचार्यवर कविशेखर सुललितप्रौढग्रन्थ-रचनयाऽनयाऽभिनवयाऽनुपमया च संस्कृतभाषाया अनितरसामान्यामपचितिं विहाय नूनम्।

कवित्वचमत्कृतिसमन्वित ललितमधुर षोडशसु सर्गेषु सुगुम्फित तदेतन्महाकाव्य भगवतोमहावीरस्य परमोदात्तचारित्र्यानुशीलनायाऽतीवाल भविष्यतीति तु स्वयमेव ऽऽस्वादनेनाऽस्य ज्ञास्यन्ति रसज्ञा सुधिय। विशेषतश्चात्र परिशिष्टभागे श्रमणवाण्यामहिंसा-सत्याऽस्तेयब्रह्मचर्याऽपरिग्रहाऽऽख्या महाव्रता समुपदिष्टा, ये हि युगेऽस्मिश्चारित्र्य सम्पादयितुमल भविष्यन्तीति सुकविना मनीषिवरेण श्रीमता मधुकरशास्त्रिणा महत्, अपूर्व "सत्य शिव सुन्दर"–रूपाऽस्मिन् ग्रन्थे प्रख्यापितम्। संस्कृत–जगति सुविदित–वैदुष्यकीर्तिना विविधोत्कृष्टग्रन्थप्रणेत्रा चात्रभवताऽऽचार्यश्रीमधुकरशास्त्रिणा विरचित. श्रीमहावीरसौरभाख्यो महाकाव्यरूपो ग्रन्थोऽय भगवत श्रीमहावीरस्य

पञ्चविंशतिशततमे निर्वाणवर्षे ह्येकेन जैनेतरेण विदुषा विहिताऽपूर्वा साहित्यसेवैव स्वीकरिष्यते निष्पक्षनिर्मत्सरमनस्केन विबुधसमाजेनेति निश्चप्रचमहं विश्वसिमि।

किम्बहुना ?—प्रबन्धोऽयं भगवतो महावीरस्य दिव्य-सन्देश-सौरभं सर्वत्र दिक्षु वितन्वन् मधुकर-गुञ्जितमिव माधुर्यातिशयेनाऽऽह्लादजननीं सुकवेरस्य कीर्तिं भुवि प्रतिष्ठापयिष्यतीति शिवम्।

दिनाङ्का.-१३-५-७६

प्रभुदत्त शर्मा
शास्त्री, भिषगाचार्य, आयुर्वेदाचार्य,
प्राचार्य., राजकीय-आयुर्वेद-महाविद्यालयस्य, जयपुरम्
अधिष्ठाता (डीन)-आयुर्वेद-विभागस्य
राजस्थान-विश्वविद्यालय, जयपुरम्



वे तो चाहते ही थे कि वह किसी प्रकार चूक जाय। शीघ्र 'तथास्तु' कहकर अन्तर्हित हो गए। भक्त को वर देकर भगवान् ने अपनी भक्त-वत्सलता भी दिखा दी और इन्द्र का काम भी बन गया। भगवान् जानते थे कि रावण जरासन्ध आदि वर प्राप्त करने के पश्चात् जनता पर अत्याचार करेंगे। उनकी बुरी मंशा को जानते हुए भी वर देना पड़ा। ये कथाएं पौराणिक हैं। इनकी ऐतिहासिक सत्यता के विषय में विवाद हो सकता है। किन्तु कहानियों का आधार सत्य घटना की अपेक्षा विश्वास अधिक होता है। ऐसी कहानियों से उन विश्वासों का पता लगता है, जो ब्राह्मण-परम्परा की देन हैं। उन्हीं के आधार पर कहानियों का निर्माण हुआ है। इनके मूल में भौतिक या पाशविक बल का प्रभुत्व छिपा हुआ है।

यज्ञ द्वारा भी स्वर्ग सभी नहीं प्राप्त कर सकते। शूद्रों का उसमें अधिकार नहीं है। उनके लिए वेदाध्ययन भी वर्जित है। तथाकथित उच्चवर्ण वालों की सेवा के अतिरिक्त उनका कोई अधिकार नहीं है। वेदवाक्य प्रभुसम्मत शब्द है। उसे अक्षरशः मानना ही धर्म है। बुद्धि या 'क्यों' के लिए कोई स्थान नहीं है। ब्राह्मण यदि गुणहीन और दुराचारी है तब भी वह पूज्य है। शूद्र गुणी और सदाचारी भी ताड़न का अधिकारी है। यहाँ मोक्ष नाम की कोई वस्तु नहीं है। मनुष्य का चरम लक्ष्य स्वर्ग है। स्वर्ग का अर्थ है धन, धान्य, अप्सराएं, साम्राज्य आदि भौतिक सम्पन्नता। जीने का अधिकार उसी का है जो सम्पन्न है। शेष उसीकी सुख सामग्री है।

ब्राह्मण-परम्परा में यह मनोवृत्ति प्रारम्भ से ही रही है कि जिस सिद्धान्त या व्यक्ति को प्रभावशाली देखा, और देखा कि जनता उस ओर झुक रही है तो उस व्यक्ति को अवतारों में स्थान दे दिया और उस सिद्धान्त को अपने ही किसी ऋषि

## रा स्था -प्राच्य-विद्या-प्रतिष्ठान
## जोधपुर

निदेशक—

*जे० के० जैन*

दिनाङ्क-६, मार्च १९७९

मुझे यह लिखते हुए परम प्रसन्नता होती है कि मेरे विभागीय सहयोगी आचार्य श्री मधुकरशास्त्री ने इस 'श्री महावीर-सौरभम्' के सोलह सर्गों मे श्री महावीरस्वामी के दिव्य-जीवन से सम्बन्ध रखने वाली विविध-घटनाओ का जो वर्णन प्रस्तुत किया है, वह सर्वत्र आकर्षक और सुन्दर है।

"सौरभ" श्री महावीर स्वामी के जीवन की झाकी के साथ-साथ जैन-सस्कृति, जैन-दर्शन और तीर्थङ्कर-परम्परा पर भी अच्छा प्रकाश डालता है।

इसके परिशिष्ट मे प्राकृतमयी श्रमण-वाणी के सस्कृत-रूपान्तर के कारण इस काव्यग्रन्थ की उपयोगिता और भी अधिक बढ गयी है।

जे० के० जैन
निदेशक
राजस्थान-प्राच्य-विद्या-प्रतिष्ठान
जोधपुर

"श्री महावीर-सौरभम्" आचार्यमधुकर शास्त्री की श्लाघनीय एवम् अनुपम रचना है। श्री मधुकरशास्त्री जी ने अजैन होने के नाते दिगम्बर, श्वेताम्बर या तेरापन्थी सम्प्रदायो के विद्वानो के मतभेदो से ऊपर उठकर ही इस उपयोगी रचना द्वारा अपनी श्रद्धाञ्जलि भगवान् महावीरस्वामी के चरणो मे २५०० वे निर्वाणवर्ष के पावनकाल के अवसर पर समर्पित करने की चेष्टा की है।

श्री शास्त्री जी ने ग्रन्थ मे निरपेक्ष भाव से दिगम्बर एव श्वेताम्बर मतो की विवादास्पद मान्यताओ को पृथक्-पृथक् देकर अपनी पक्षपात-रहित दृष्टि से घटनाओ व परिस्थितियो का चित्रण किया है। विद्वान् लेखक ने ग्रन्थ के १६ सर्गो मे इतिहास को अविकल अक्षत बनाये रखकर तथ्यो का समीचीन उपयोग किया है और अन्त मे 'परिशिष्टम्' के रूप मे स्थायी भावो, विचारो और धारणाओ को रत्नसञ्चय के रूप मे सजोया है।

सक्षेप मे मैं कह सकता हूँ कि इस ग्रन्थ के लेखक ने पक्षपातरहित भावना, परिश्रम, अध्यवसाय एवम् सूझबूझ का परिचय दिया है, जिससे ग्रन्थ की उपयोगिता मे चार चाँद लग गये है।

हजारीलाल जैन

दिनाङ्क २४-२-७६

भू०पू० उपनिदेशक

पत्राचार-पाठ्यक्रम

राज्य शिक्षा विभाग, उदयपुर

खड्गनाथमिश्रः

प्राचार्यः

महाराज-संस्कृत-महाविद्यालयः

[ डीन,— संस्कृत-सकाय , राजस्थानविश्वविद्यालयः, जयपुरम् ]

साहित्य-मीमांसाद्यनेकशास्त्राचार्येण चिरात् पुरातत्त्वसन्धानेऽनुसन्दधता सकृत-सेवा-सप्रक्त-मनसा मनीषिणा कविप्रवरेण श्रीमता मधुकरशास्त्रिणा सर्वानुमताऽहिंसा-प्रधान-जैनागमाचार्येण भगवता श्री महावीरेण लोककल्याणार्थं समुपदिष्टोपायाननुसृत्यैव सरलातिसरलाया मधुरातिमधुरायाश्च देववाण्या विरचितमदोऽन्वर्थनामधेय "श्रीमहावीर-सौरभम्"-नाम महाकाव्यरूप पुस्तक बालानामपि सहज-बोध-प्रदमालोक्य नितान्त प्रसीदामितमाम् ।

वस्तुतोऽदो निबध्नता सुविदुषा श्रीशास्त्रिणा सफलो भूयान् श्रमो विहितो यत इद विषयदृष्ट्या, भाषा-शैल्या, गुम्फन-प्रणाल्या चाऽनुपम समेषा लाभप्रद झटिति प्रचारमेष्यति ।

सर्वथैवाऽह ग्रन्थकर्त्तुर्ग्रन्थस्य च शुभ कामये । इति ।।

खड्गनाथमिश्रः

दिनाङ्का. १३-४-१९७६ महाराज-संस्कृत-महाविद्यालयः, जयपुरम

'श्री महावीर-सौरभम्'—नाम काव्य मयाऽऽदितः पञ्चदशसर्गपर्यन्त समनोयोग पठितम्। प्रथमसर्गे हिन्दीभाषाया "आल्हा"-इत्यभिधान छन्द आश्रित्य प्राक्तनी देशदशा वर्णिता। द्वितीयसर्गादनन्तर महावीरस्य चरित निबद्धम्। नवमपश्चात् पञ्चदशाद्यपर्यन्त भारतवर्षीय-धर्मेतिहासदर्शनसंस्कृत्या-धारो वेदोऽस्तीति दर्शितम्। अत ऊर्ध्वं दिगम्बर-श्वेताम्बर-परम्परामवलम्ब्य श्रीमहावीरस्वामिनश्चरित प्रसादगुणाऽलङ्कृता सरल-सरसा परममनोरमा शैलीमनुसृत्य समुपनिबद्धम्। अतोऽस्तीद सर्व-सम्मतम्।

संस्कृतभाषानिबद्धमीदृश चरित मया पूर्वं न पठितम्। काव्यग्रन्थ-स्यास्य भाषा परिमार्जिता विद्यते। काव्ये सुललितः प्रवाहो वर्त्तते। सरलता सरसता च कृतावेतस्या सर्वत्र विराजेते। अय ग्रन्थ. पाठकानाह्लादयिष्यतीति सुदृढोऽस्ति मे विश्वासः।

आचार्यश्रीमधुकरशास्त्रिणामेषा कृति संस्कृतसाहित्ये जैनदर्शनश्री-महावीरचरित्रवर्णन-दृष्ट्या स्वप्रकारक प्रथम-स्थान बिभर्त्तीति विश्वसिमि। किम्बहुना ? परमोत्कृष्टोऽय ग्रन्थः सर्वथाऽभिनन्दनमर्हति।

**(डा०) मथुरालाल शर्मा**

दिनाक'-१६-७-७६

[एम्० ए०, डी-लिट्]

भू०पू० उपकुलपति

राजस्थानविश्वविद्यालयस्य जयपुरम्

श्रीः

राजस्थान का सुप्रसिद्ध

# हिन्दी-विश्वभारती-शोधसंस्थान, बीकानेर

निर्देशक —

विद्यावाचस्पति', गीवी

विद्याधरशास्त्री, एम्० ए०

दिनाङ्क २-३-१९७९

काव्यामृतवर्षिणा, आचार्यवर्येण श्रीमधुकरशास्त्रिणा प्रणीतस्य 'श्रीमहावीर-सौरभस्य' प्रतिसहृदय—जन—हृदयोल्लासिना सत्परिमलेन सन्तृप्तोऽहमस्य सत्प्रसारकाय श्रीमते श्रीमधुकरशास्त्रिणे शतशो हार्दिकान् साधुवादान् समर्पयन्ननुभवामि काञ्चन परमामपूर्वामानन्दानुभूतिम् ।

सर्वत्रैव स्वाभाविकेन प्रसादगुणगुम्फितेन सरसेन काव्यप्रवाहेण सुसमन्वितेय कृति समस्त-जैनसंस्कृति-सदितिहास-तद्दर्शन-रहस्य-समुद्घाटन-पुरस्सर यथा श्रीमहावीरस्वामिनोऽखिला जीवनलीला प्रतिप्राणिप्राणसंरक्षिणी करुणामयी तदन्तः करणप्रवृत्तिश्च चित्रयति तदास्ते सर्वमपि सत्प्रभावजनकम् ।

षोडशसर्गानुबद्धे परमहृदयाह्लादके महाकाव्यरूपे 'सौरभे'-ऽस्मिन् श्रीमहावीरस्वामिन समस्तमेव जीवनचरित्र यथा वर्तते सर्वत्रैव सम्वर्णित तत्तद्रमभावसम्वलित तथाऽस्य गणना भविष्यति केषुचित् सत्काव्येष्वित्यत्र नाऽस्ति कश्चन सशय. ।

सत्कवेरस्य सहृदय-हृद्या पदावलि सर्वत्रैव परमसरलाऽपि कियत्यर्थगम्भीरेति कैश्चन निम्नलिखिते पद्यै सुखेनाऽनुमातु शक्यते —

"स वर्धमानोऽध्वनि साधनाया -
असोढ नाना-विकटान्तरायान् ।
उत्पात-हालाहलमेष किन्तु
व्यधात् सुधा स्वाद्रुतसाम्ययोगात्" ॥

"न जीवनं भोग-सुखाय केवलं,
न राजसिंहासनलब्धि-हेतवे ।
इदन्तु सर्वं बहुशोऽप्यवाप्यते,
न किन्त्वितो मानसशान्तिराप्यते" ॥

"सत्यस्य स प्रज्वलितः प्रदीपः
सदा प्रभुः श्री श्रमणो बभूव ।
आसीत् प्रियं तस्य च सत्यमात्रं,
न कोऽपि मर्त्यो न च कोऽपि भक्तः" ॥

विद्याधरशास्त्री
सरस्वती-सदनम्,
बीकानेर

# स्वकीयं किञ्चिन्निवेदनम्

तदेतत् सुविदितमेव प्रज्ञा-प्रवणानामनुसन्धातृप्रवराणामैतिह्यविदां मनीषिणा यज्जैन-धर्मपरम्परा विराजते नितान्तमेव प्राचीनेति। परम्परायामस्यां तीर्थङ्करजन्म नूनं सर्वोत्कृष्टं महत्त्वमाबिभर्ति। त्रयोविंशतिसङ्ख्याकास्तीर्थङ्करा महावीरस्वामिनः पूर्वं समजायन्त। चतुर्विंशतितमोऽन्तिमश्च तीर्थङ्करो भगवान् महावीरो व्यराजत। वर्धमानो महावीरो निखिलवैभवविराजिते राजप्रासादे जनिमलब्ध। यं हि वयोभागमिह जागतिका इतरे बालका व्यतिगमयन्ति क्रीडाकूर्दनादिबालोचित-प्रवृत्तिषु, तमेव निजाऽऽयुषो भागमसौ चिन्तने मनने च व्यत्ययापयत्। तान्निष्कर्षरूपेण दृढीभूतसङ्कल्पोऽसौ गार्हस्थ्य-बन्धनान्युत्सृज्य जगदुद्धारनिमित्तं राजहर्म्यान्निश्चक्राम। महापुरुषेणाऽनेनाऽभ्यवायि—"एकस्मिन् आत्मनि विजिते समस्तमपि विजितं भवति। न ऽस्ति शत्रुर्बहिष्टात्, स तु वासनायामहङ्कारे च प्रच्छन्नोऽन्तरेव विद्यतेऽतश्च स एव सर्वतः प्राग् विजेतव्यः। तत्समाप्तौ सत्यामेवाऽऽनन्दसद्भाव"—इति। स्वयं महावीरस्सार्ध-द्वादशवर्षाऽवधिक-लोकोत्तर-तपश्चर्याऽनन्तरमेवाऽस्मिन्नात्मविजयाऽध्यवसाये साफल्यमाससाद। तत्प्रभावात्सर्वबन्धननिर्मुक्तो निर्ग्रन्थश्च समजायत। ऋजुकूलातटे मोहनीयकर्मक्षयं विधाय वीतरागतामवाप। समभावं समदृष्टिञ्चाऽविन्दत्।

महावीरो हि जगत्यहिंसारूपस्य परमधर्मस्य पूर्णत्वमाविश्चकार। तेनात्राऽहिंसाया नितान्तं सूक्ष्मा, गम्भीरा मनोवैज्ञानिकी च व्याख्या व्यधायि। तेनाऽवोचि—"यत् स्वस्मै अप्रियं, तदन्यस्मा अप्यप्रियमेव भविष्यति, यश्च मानवस्सत्यमेतदुपेक्ष्याऽन्यथा व्यवहरति स सर्वथा पापाऽऽचार-परायण एवे"—ति। पापाऽऽचारमिमं श्रीमहावीरो हिंसाऽसत्य-चौर्य-कुशील-परिग्रहेतिरूपेण प्रामुख्येण पञ्चप्रकारकं निरवोचत्। एतेभ्यः पञ्चप्रकारकेभ्यः पापाऽऽचारेभ्यश्च मुक्तो भूत्वाऽऽत्मा विशुध्यति। शुद्ध आत्मैव च वर्त्तते परमात्मा। परमात्मेति नाम नाऽस्ति काचित् परसत्तेति।

भगवतो महावीरस्य दर्शनं-जैनदर्शनं-हि विद्यते विशुद्धमात्मदर्शनम्। मनुष्यो नास्ति शरीरमेव, प्रत्युत शरीरात् पृथगास्ते तदीया वास्तविकी सत्ता। असौ खलु जागतिकी सत्ता विद्यते सप्ततत्त्वविभक्ताम्। तानि च सप्ततत्त्वानि

यथाः—(१) जीवः, (२) अजीवः (३) आस्रवः, (४) बन्धः, (५) सम्वरः, (६) निर्जरा, (७) मोक्षश्चेति।

समग्रेभ्य कर्म-सस्कारेभ्य आत्मा यदा सर्वथा पृथग् भवति, तदा तदवस्थाया एव मोक्ष इति नामधेयम्। इत्थञ्च महावीरस्तदेवाऽवोचद् यद्धि सनातन शाश्वतञ्च सत्यमास्ते। जैनदर्शनान्तर्गतोऽनेकान्तवादो नितान्त-महत्त्वपूर्णस्सम्यगवबोद्धव्यश्च सिद्धान्त आस्ते। यतस्तावत्तत्प्रभावाद् दृष्टिशुद्धिर्जायते। मानवस्स्व-सीम्नि सपाबद्धो विद्यते। यथा हि वय स्वस्थाने सत्याऽऽश्रितास्तथाऽपरोऽपि मनुष्यस्स्वकीये स्थाने सत्याऽऽश्रितो वर्त्तते। यद्यपि सोऽस्मद्वार्त्ता नाऽवबुध्यतेऽस्मदीयकथनविरुद्धञ्च वक्ति, तथापि तत्कथममस्माभिश्शान्ति-पूर्वक श्रोतव्यमास्ते। तदीया दृष्टिः परिस्थितिश्च निबोद्धव्या विद्यते। यतो हि कथाचिदप्यपेक्षया तत्कथनमपि सत्यमेव। इत्थ विहिते सत्यनन्तर द्रक्ष्यामो वय यत् सोऽप्यस्मद्वार्त्ता शान्ति-पुरस्सरमाकर्णयति समवबुध्यते चे-ति। प्रकारेणाऽनेनाऽनेकान्तसिद्धान्त-स्स्याद्वादश्च सामाजिक-सद्भावना सहिष्णुता-प्रस्थापनदृशा समन्वयाऽऽत्मक-तात्त्विक-विमर्शपथ-रूपेणाऽत्यन्तमेव महत्त्व भजतेतमाम्।

जैन-धर्मे खल्वाचार-शुद्धेरास्ते सर्वाधिक महत्त्वम्। विचारमूलकश्चाऽऽचार इत्यतो हेतोर्विचारशुद्धौ सत्यामेवाऽऽचार-सशुद्धिस्सम्भवेति निर्विवादमिदम्। सम्यग्दर्शन-सम्यग्ज्ञान सम्यक्चारित्र्य-रूपं रत्नत्रय सामाजिक-जीवन-परिष्काराय कियद् वोपयोगीत्यत्र नाऽस्ति विस्तरेण कथनस्याऽप्यपेक्षा। महावीरस्वामिना गृहस्थाना परिव्राजक-साधूनाञ्च कृते निरमीयन्त केचन नियमाः। मानवश्चेद् गृहस्थाऽऽश्रमस्य पालन कुरुते, तर्हि तत्कृते निम्नलिखिताना पञ्चनियमाना परिपालनमनिवार्य्यं भवति। ते च नियमा-यथा;— (१) अहिंसा, (२) सत्यम्, (३) अस्तेयम, (४) ब्रह्मचर्यम्, (५) अपरिग्रहश्चेति। एतेषा नियमाना परिपालनेन मानवस्याऽऽचारविचार-योस्सयम आयाति-इत्यत. कारणाच्च सामाजिक-जीवन-परिष्कृतये नियमा-इमे परमावश्यका—इति सुस्पष्टमेव।

अद्याऽपि वहवो जैन-मुनि-प्रवरा आचार्यवर्य्याश्चाऽणुव्रतानामेतेषा पालनाय समधिका प्रेरणा प्रददतो विराजन्त—इति न कस्यचिदपि शेमुषीमतस्तिरोहितमदः।

तदित्थ महावीरस्तदीया दिव्योपदेशाश्चाऽस्मत्समक्ष त्याग-तपस्या-साधनाऽऽयगाऽपरिग्रहाऽऽदिसिद्धान्तानामुत्कृष्टमादर्शमुपस्थापयन्तो निखिलमङ्गलमय

मार्गं निर्दिशन्तीति तस्य महापुरुषस्याऽनिर्वचनीय-वैशिष्टयमय-व्यक्तित्व-विमुग्धमना अहं 'श्रीमहावीर-सौरभम्'-इत्यभिधानं तदीयोदात्त-जीवनदर्शन-प्रतिपादनात्मकं ग्रन्थमिमं यथामति प्राणैषिषम् ।

नाऽहं जैनधर्मानुयायी, न वा जैनधर्म-दर्शनेतिहास-विज्ञोऽस्मीति निगदितुमीष्टे । अस्मि तु भगवन्तं महावीरम्प्रति समधिकश्रद्धानिबद्धान्तःकरण एव केवलम् । तयैव प्रोत्साहितस्सम्प्रेरितश्च सन्नहं देववाणीमयं काव्य-ग्रन्थमिमं निगुम्फ्य सहृदय हृदयानामत्रभवतां भवतां पुरत उपस्थापयन्नमन्द-मानन्दमनुभवामि नूनम् ।

सम्यगनुष्ठितेऽपि प्राग्रूप [प्रूफ] संशोधने सीसकाक्षर-योजक-महाशयस्या-नवधानवशात्पुनरवलोकनमन्तरैव मुद्रितत्वाद्धेतोर्यत्र तत्र याः काश्चित् त्रुटयोऽत्राऽजायन्त तासां कृते महान्तमेव खेदं हृदि दधदहं विपश्चिन्मूर्धन्यास्तत्र-भवतो भवतोऽभ्यर्थये यन्नूनं मान्यास्ते संलग्नशुद्धिपत्रानुसारेण संशोध्य तत्तत्स्थलानि पठन्तु सानुग्रहमिति ।

"कोटा"—नगरस्थया "श्री जैनश्वेताम्बरेढो"—त्यभिख्यया संस्थया ग्रन्थस्यास्य समग्रमपि प्रकाशनभारं स्वयमुररीकृत्य स्वीयो धर्म-वाङ्मयाऽनु-रागः प्रादर्शीत्यस्माद्धेतोस्तदध्यक्ष वरेण्यानां, मन्त्रि-महोदयानां सदस्य-महाशयानाञ्च कार्तज्ञमहमाविष्करोमीति शिवम् ।

पञ्चविंशतिशततम
श्री महावीरनिर्वाणशताब्दी-
महोत्सवसम्वत्सरः
वैशाखशुक्लदशमी, २०३३ वि०

आचार्यमधुकरशास्त्री
राजस्थान-प्राच्यविद्या-प्रतिष्ठानम्
कोटा-६

श्री गणाधिपतये नम.

# श्री हा ीर ौरभम्

—: प्रथमः सर्ग :—

— मङ्गलम् —

–१–

सत्याऽहिंसा - स्नेह - रूपिणी
जिन - वर - चरित - तरङ्गिणी।
भवतु पाप - परितप्त - भुवन - भुवि
सुकृति - सुधा - सञ्चारिणी।
शान्ति - लता प्रोत्फुल्ला विलसतु
सुख - समृद्धि - फल - दायिनी।
वीतराग - वागस्तु सुमति - मय-
विश्व - बन्धुता ऽऽ धायिनी ॥

सृष्टेश्शाश्वतनियम :—

–२–

मावतायां दानवताया–
नग्न - ताण्डवं भवति यदा।
निमज्जतीह धर्म आडम्बर–
दुष्कृति - पापाम्बुधौ यदा।
त्रस्यति सुजनो, हृष्यति कुजनो–
नश्यति सत्य स्वार्थ - हतम्
स्वाऽऽदर्श - च्युत - राष्ट्र - जीवन
भवति नितान्त गर्त्त - गतम् ॥

–३–

भ्रष्टाचारो भीषण - भुजगो–
निर्गलितुमीष्टे दीन - जनान्।
परिपीडन - शोषण - वैराग्निः
परितो दहति भृश सुजनान्।
अन्धकार - परिमग्न पन्था–
दृश्यते न कुत्रापि यदा।
दिक्प्रबोधक. कोऽपि महात्मा
वीक्ष्यते न कुत्रापि यदा॥

–४–

तदा महानात्मा कश्चन भुवि
धर्म-नीति-सुख-शान्तिमयम्।
मनुज - जीवन विधातुकाम.
सदाचार - सुविचार - चयम्।

शिक्षयितुं गृह्णाति जन्म
मानव-रूपेण निभृतममलम् ।
यद्दर्शनतः समुत्फुल्लमथ
भवति भुवन-मानस-कमलम् ॥

-५-

तदा धन्य - धन्यं सामाजिक—
जीवनमिह नैराश्य - मयम् ।
नवोत्साह - नव्याऽऽशा - नूतन—
चेतनया सद्वृत्त्युदयम्—
प्राप्य पाशविक-बलं व्यपास्य च—
दिव्य-गुणाऽऽधानं लभते ।
तिमिर-रहित-सुज्योतिर्भ्राजित—
मार्गे प्रगति प्रारभते ॥

सार्धद्विसहस्रसम्मितवत्सरेभ्यः प्राक्तनी देश-दशा :—

-६-

प्रायस्सार्ध - सहस्रद्वय - मित—
वर्षेभ्यः प्राक् स्व - भारते ।
घोर-निराशा-व्याकुल-जन-जन-
मनोनिवह - [illegible] ।
अन्धकार आः ! घनान्धकारः
सर्वत्राऽऽसी[illegible] ।
अभूदधर्मस्तिरोहिते
धर्मे च [illegible] [illegible] ॥

–७–

हिंसा - ताण्डवनृत्यमास
भौतिकता - चक्रं प्रबलमभूत् ।
जाति-पंक्ति-कृत - भेद - भावना-
भव - वैषम्य प्रचलदभूत् ।
नारीवर्गोऽधिकार - शून्यो-
ऽभवन्निरीह इहाऽविरतम् ।
तात्त्विक-बोध-रहित-जन-जीवन-
मभूत् प्रस्तराऽर्चा - निरतम् ॥

–८–

सार्वजनीन साम्यं नासीत्
स्नेह - सूत्रमुच्छिन्नमभूत् ।
शूद्रानतिनीचान् प्रकल्प्य
मनुजत्व - मूल्यमथभग्नमभूत् ।
आचारं परिहाय जातिगत-
गौरव - डिण्डिम-घोषोऽभूत् ।
हित्वा ज्ञान - प्रचार - कार्य्यं
स्वार्थ-सिद्धि-रति-पोषोऽभूत् ॥

–९–

अभितः परित पार्श्वे दूरे-
ऽभवत् प्रचण्ड पाखण्डम् ।
स्वार्थ - निरतता - झञ्झावाते
शिवमभवत् खण्ड - खण्डम् ।

जैन–श्रमणज्ञानद्युतिरपि
　　समजायत मन्दैव मनाक् ।
शिथिलाऽऽचरश्श्रमणसमूहो–
　　योग्योऽभून्न यथाऽऽसीत् प्राक् ।।

–१०–

खिन्न-विखिन्न-मनुजता-मानस–
　　मभूत् प्रतीक्षा-रत भृशम् ।
यदागत्य दिव्यात्मा कश्चित्
　　सुखयतु विश्वं कष्ट-कृशम् ।
अहो ! अगण्याः प्राणि-समूहा–
　　भ्राम्यन्तो घोरे तमसि ।
प्रार्थयन्त यदुदेतु द्युतिकृद्–
　　ज्ञान-भानुमान हृन्नभसि ।।

क्रान्ति - प्रभाकरोदय :—

–११–

निखिल-विश्व-मानवता यस्मात्
　　प्रापाऽहिंसा - सत्यमयम्–
पुण्य-ज्योतिर्विचार-तरणि–
　　स्सोऽयमवाप विमलमुदयम् ।
सार्धद्विसहस्राब्देभ्यः प्राग्
　　धर्म-मर्म हतमास यदा ।
कर्म शर्म - मार्ग - प्रच्युतमथ
　　पशुता प्रसृताऽभवद् यदा ।।

-१२-

रूढिवाद-दृढजाल-निगडितो
गतस्समाजो विनिपातम् ।
दूषित-हृन्नारी-समुदायस्या—
ऽऽप्नोन्मानो व्यपघातम् ।
एतादृक्षे काले 'सत्यं—
शिवं सुन्दरं' सन्देशम् ।
महावीर आदाय जन्मना
व्यपावयद् भारत - देशम् ।।

-१३-

महात्मना तेनाऽत्र नवीनो—
मानवता - मन्त्रो दत्तः ।
जाड्य-जालमपहाय नूतनो—
जन-जीवन-पाठः प्रत्तः ।
'कर्मकाण्ड'-नाम्नि प्रचलन्ती
पशुहिंसां पाप न्यगदत् ।
सत्यमहिंसां समानतामथ
सोऽनिवार्य-तत्त्व न्यवदत् ।।

-१४-

सत्याऽहिंसा-स्नेह-रूपा त्रिवेणी
यन्माहात्म्यात् प्राप तीव्रं प्रवाहम् ।
सोऽयं स्वामी 'श्री महावीर' नामा
भूयान्नित्यं विश्व कल्याण-कारी ।।

—१५—

अन्त्यश्चतुर्विंशतिसङ्ख्यकेषु
तीर्थङ्करेष्वत्र जगत्प्रपूज्यः ।
जिनो 'महावीर'—इति प्रसिद्धः
प्रणम्यतेऽसौ परमात्म-रूपः ॥

—१६—

धन्यो महात्म—मूर्धन्यो—
मगधाऽवनि—सम्भवः ।
भगवान् वर्धमानोऽस्तु
श्रेयसे युग – पूरुषः ॥

इति श्री आचार्य मधुकरशास्त्रिविरचिते
श्री महावीर—सौरभे प्रथमस्सर्गः समाप्तः



# श्री महावीर सौरभम्

## —: द्वितीयः सर्ग :—

महावीर-प्रभोः प्राक्तन-स्थितिस्तीर्थङ्कर-परम्परा च :—

(क) तज्ज्ञानाधारीभूतेतिवृत्तपरिचय :—

–१–

महावीर-प्रभुः प्राभूद् यदा भव्येऽत्र भारते ।
तदा काऽऽसीद् दशाचेति त्वितिहासात् प्रकाश्यते ॥

–२–

इतिहास–दृशैव स्याद् यतोऽतीताऽवलोकनम् ।
न परं प्राप्यते तादृगितिवृत्तं पुरातनम् ॥

–३–

अत्र प्राक् प्रचलन्त्यासीच्छ्रुति - स्मृति - परम्परा ।
ऋचो यतो न लिखिता मन्त्रद्रष्टृ - महर्षिभिः ॥

–४–

ते त्वात्म-दर्पणेऽकुर्वन् मन्त्राणां दिव्य - दर्शनम् ।
श्रुतानुश्रुत - रूपाच्च क्रमान्मन्त्रा जगाज्जनम् ॥

–५–

अक्षुण्ण - धारया प्राप्ताः सुरक्षां प्रसृतिं तथा ।
अतएव श्रुतिरिति वेदानां नाम विश्रुतम् ॥

–६–

स्मरणाधारतो यच्च, सुरक्षितमजायत ।
तस्यैवाऽऽस्ते स्मृतिरिति - सञ्ज्ञा, ज्ञानस्य भूतले ॥

-७-

इत्येतयैव रीत्या नु सुरक्षितमभूदिह ।
जैनेतिवृत्तमपि च सुचिरं जैन - वाङ्मयम् ।।

-८-

सहस्रशाऽब्द - प्राचीन - परम्पराऽवबोधनम् ।
वाङ्मयस्यास्य सर्वस्याऽध्ययनादेव जायते ।।

-९-

वेदा भारतवर्षस्य धर्मेतिहास - दर्शना—
ऽऽधारत्वेन सुविख्याताः सर्वस्मिन् जगतीतले ।।

-१०-

स्मृतयस्सोपनिषदो रामायणमथापि च ।
महाभारतमप्यास्ते धर्म - दर्शन - वाङ्मयम् ।।

-११-

इतीत्थमेव बोद्धव्यं जैन बौद्धञ्च वाङ्मयम् ।
धर्मग्रन्थेतिहासत्वदृष्ट्या सुष्ठु पुरातनम् ।।

-१२-

रामायण - युगादास्ते प्राचीनस्तु सहस्रशः ।
वत्सरेभ्यो वेदकालः सुधीजन - मतादिह ।।

-१३-

तत्कालादेव देशे नः सम्यक् पर्युपलभ्यते ।
नाना-चिन्तन-शैलीनां सुविस्तीर्णा परम्परा ।।

-१४-

वृहताऽत्र पुराणेषु रूपेण परिलभ्यते ।
विविधाश्चिन्तना-धाराः सन्दर्भाश्च स्फुटं ननु ।।

-१५-

रामायणं तु सम्बोध्य महाभारत - सयुतम् ।
नाना - चिन्तन-धाराणामाकर - ग्रन्थरूपतः ।।

(ख) तीर्थङ्कर - परम्परा :—

-१६-

महावीरात् प्रभोः प्रागप्यासीत् तीर्थङ्करात्मिका।
सेय परम्परा तस्मिन् साहित्य-इति विद्महे ।।

-१७-

सर्वाधिक विवरण दत्ते जैन-परम्परा ।
यस्यां तीर्थङ्कराः ख्याताश्चतुर्विंशति-सङ्ख्यकाः।।

-१८-

अधस्ताद् दीयते तेषां शुभाऽभिधान-तालिका ।
जनि-स्थान तदग्रे चोल्लिख्यते सु समासतः ।।

| क्रमाङ्काः | तीर्थङ्करनामधेयम् | जन्मस्थानम् |
| --- | --- | --- |
| १ | श्री ऋषभदेव. | अयोध्या |
| २. | श्री अजितनाथः | |
| ३. | श्री सम्भवनाथः | श्रावस्ती |
| ४. | श्री अभिनन्दननाथ· | अयोध्या |
| ५. | श्री सुमतिनाथ. | ” |

| क्रमाङ्का. | तीर्थङ्करनामधेयम् | जन्मस्थानम् |
|---|---|---|
| ६. | श्री पद्मप्रभुः | कौशाम्बी |
| ७. | श्री सुपार्श्वनाथः | काशी |
| ८ | श्री चन्द्रप्रभः | चन्द्रपुरी |
| ९ | श्री पुष्पदन्तः | काकन्दी |
| १०. | श्री शीतलनाथः | भद्दलपुरम् |
| ११ | श्री श्रेयास (श्रेयो?)नाथः | सिंहपुरी,सारनाथः |
| १२ | श्री वासुपूज्यः | चम्पापुरी |
| १३. | श्री विमलनाथः | कम्पिला |
| १४ | श्री अनन्तनाथः | अयोध्या |
| १५ | श्री धर्मनाथः | रत्नपुरी |
| १६. | श्री शान्तिनाथः | हस्तिनापुरम् |
| १७ | श्री कुन्थुनाथः | ,, |
| १८. | श्री अरह (अरहो?) नाथः | ,, |
| १९. | श्री मल्लिनाथः | मिथिलापुरी |
| २०. | श्री मुनिसुव्रतनाथः | राजगृहम् |
| २१ | श्री नमिनाथ | मिथिला |
| २२ | श्री अरिष्टनेमिनाथः | शौरिपुरम् |
| २३. | श्री पार्श्वनाथः | काशी |
| २४ | श्री महावीर स्वामी [वर्धमानः] | कुण्डलपुरम् [वैशाली] |

-१९-

इत्युपर्युक्त - संज्ञेषु सर्व - तीर्थङ्करेष्वपि ।
विहाय पञ्चनामानि 'नाथ'-शब्दोऽन्त ईरितः ॥

-२०-

नामान्तराणामपि सम्प्रयोगं
तीर्थङ्कराः केचन धारयन्ति ।
यथाऽऽदिनाथोऽभवदादिदेव-
स्तथार्षभौ वै वृषभोऽपि चोक्तः ॥

-२१-

संज्ञा सुविधिनाथेति पुष्पदन्तस्य चाऽपरा ।
महावीरस्य चाऽप्यास्तेऽधोङ्कितं नाम-पञ्चकम्-

-२२-

'व  ानः' 'सन्मतिश्च' 'वीरो' 'ऽतिवीर'-इत्यथो ।
'महावीर' - स्तथेत्येतत् पावनं भुवनावनम् ॥

ऋषभदेव :—

-२३-

भगवान् ऋषभदेवस्तु वर्णितो वेद-वाङ्मये ।
आद्यस्तीर्थङ्करो - जैन - धर्म - प्रवर्त्तकस्तथा ॥

भरतो भारतञ्च :—

-२४-

ऋषभदेव - सुतो भरतोऽभवद्-
भुवन - भूषण - भारत-भूपतिः ॥

सकल-सद्गुण-मञ्जु-सुधार्णवः
श्रुति-पुराण-कथासु सुवर्णितः ॥

-२५-

सम्राजो यस्यनामैव त्वाधारी कृत्य 'भारतम्' ।
इति [illegible]ज्ञाऽभ[illegible]न्नोऽस्य देशस्य विश्व-विश्रुता ॥

-२६-

अन्यो 'बाहुबली'-त्याख्यस्तनयोऽमित-विक्रमः ।
प्रभो ऋषभदेवस्य समभून्मेदिनी-पतिः ॥

-२७-

द्वितीयाऽजितनाथात्तु मल्लिनाथान्त-सत्कथाः ।
तीर्थङ्कराणां लभ्यन्ते विस्तृता जैन-वाङ्मये ॥

-२८-

तीर्थङ्कराणामेतेषां धातुपाषाण-निर्मिताः ।
प्राप्यन्ते प्रतिमाः प्रत्ना नानारूपास्सहस्रशः ॥

-२९-

ऋषभेण कलाः सृष्टा ब्राह्मी स्वतनया तथा ।
अशि[illegible]यां लिपिं यस्माल्लिपिर्ब्राह्मीति विश्रुता ॥

मुनिसुव्रतनाथ :—

-३०-

जन्म राजगृहे जातं 'विहार'- प्रान्त-[illegible] ।
'सम्मेद शिखरे' चास्य निर्वाण [illegible] ॥

सम्मेद शिखरो गिरि :—

-३१-

इह 'सम्मेद - शिखरं' 'श्री पार्श्वनाथ-पर्वतः'-
इतिनाम्नाऽद्य विख्यातं शुभं परम-पावनम् ॥

-३२-

यस्मिन्नवाप्ता निर्वाणं तीर्थङ्करास्तु विंशतिः ।
पर्वतस्स कथन्न स्याद् दिव्यो भुवन - मङ्गलः ॥

एकविंशतितमस्तीर्थङ्करो नमिनाथ :—

-३३-

अनासक्ति - प्रतीकोऽसौ नमिनाथस्तु मैथिल-
जनकान्वय - सम्भूतोऽस्त्यहिंसा-धर्म - धारकः ॥

द्वाविंशतितमस्तीर्थङ्करो नेमिनाथ :—

-३४-

यदुवंश्य - श्रीकृष्णस्य पितृव्य - तनयो ह्यसौ ।
नेमिनाथो विवाहे स्वे सम्श्रुत्य श्वशुराऽऽलये-

-३५-

भोजनार्थं हन्यमान - जीवानां घोर-चीत्कृतीः ।
जातग्लानिस्तपस्यार्थं 'गिरिनार'-गिरिं गतः ॥

१ ऋषभदेव - वासुपूज्य - नेमिनाथ - महावीर - व्यतिरिक्ता - अवशिष्ट - विंशतिसंख्याकास्सर्वेऽपितीर्थङ्करा अस्मिन्नेव सम्मेद-शिखरे निर्वाणमवाप्तवन्त-इति सुप्रसिद्धमेवैतत् ।

-३६-

अयमेव[1] गिरिश्चास्य निर्वाण - स्थलमीरितम् ।
विद्यतेऽयं महातीर्थो-गुर्जर[2]-प्रान्त-संस्थितः ॥

त्रयोविंशतितमस्तीर्थङ्करः पार्श्वनाथ :—

-३७-

भगवत्पार्श्वनाथस्य वाराणस्यामभूज्जनिः ।
पिता राजाऽश्वसेनोऽम्बा-वामादेवी तथाऽभवत् ॥

-३८-

एतस्य बाल्य - कालीना घटनैका महाद्भुता ।
ललिता प्रेरिका चाऽत्र समासेनैव दर्श्यते ॥

-३९-

गङ्गातीरे परिभ्राम्यन् पार्श्वनाथस्स बालकः ।
तपोऽग्नेः कस्यचित्साधोः प्रज्वलत्काष्ठमध्यगम् ॥

-४०-

अपश्यन्नाग - युगलं[3] दयाऽऽर्द्र - हृदयश्च सन् ।
तत्राऽऽकर्ष्य मुनिध्यानं सर्पयुग्ममजीवयत् ॥

-४१-

अग्रेऽपि नाग-युगल — सम्बन्धः पार्श्वजीवने ।
विलोक्यते यत्र-तत्र बहुशोऽतश्शुभावहः ॥

१ 'गिरनार'-पर्वत इत्यर्थः ।

२. वर्त्तमानभारतवर्षस्य 'गुजरात'-इतिनाम्ना प्रख्याते प्रान्तेऽस्तीतितात्पर्यम् ।

३. नाग - युगलं सर्पमिथुनमिति यावत् ।

-४२-

त्रिंशद् - वर्ष - वयस्येषः पार्श्वनाथो यदा गृहम् ।
त्यक्त्वा तपोरतो जातस्तदानीमुपसर्गतः ॥

-४३-

त्रातुं बहु प्रायतत　ाग - युगलं मुहुः ।
"धरणेन्द्रः" स नागोऽभूत्पत्नी 'पद्मावती' तथा ॥

-४४-

अतएव विरच्यन्ते फणा - मण्डल - मण्डिताः ।
प्रभोश्श्रीपार्श्वनाथस्य ह्यद्यापि प्रतिमास्समाः ॥

-४५-

प्रायस्सप्तति-वर्षाणि यावद् भारत - भूतले ।
भ्रामं-भ्रामं पार्श्वनाथोऽहिंसा-प्रसरणं व्यधात् ॥

-४६-

महावीरात् प्रभोः पूर्वं सार्धवर्षशतद्वयात् ।
सम्मेद-शिखरे श्रीमान् पार्श्वो निर्वाणमाप्तवान् ॥

चातुर्याम-मर्यादा :—

-४७-

प्राचीन-धर्म-धारायाः स्थिर-चिन्तन-वीचिषु—
कालक्रमादज्ञतोत्थो - यदा दोषोदयोऽभवत् ॥

-४८-

तदा व्यधात् पार्श्वनाथश्चातुर्यामोपदेशनम् ।
'अहिंसा'[1] 'सत्य'[2]-'मस्तेय'[3]-'मपरिग्रह'[4]-मुद्धरन् ॥—

दिव्य-क्रान्ति-युगोऽय :—

-४९-

इत्थञ्च तीर्थङ्कर-पार्श्वनाथ-कालेऽत्रदेशे दृढ-बद्ध-मूल-
क्रान्त्यङ्कुरोत्पत्तिरपिप्रजाता हेतुर्महावीर-जनुः प्रसङ्गे ॥

महावीरस्य पूर्वजन्मसन्दर्भ :—

-५०-

[क] पूर्वजन्मनि विश्वासं धत्ते भारत-संस्कृतिः ।
महावीरस्य विषये अतएवैतदुच्यते ॥

-५१-

स[5] आप तीर्थङ्करतामनेक प्राग्जन्मसु प्रार्जित-साधनातः ।
भव्या च[6] तत्पूर्वभवीयगाथा सुविस्तृता राजति जैन-शास्त्रे ॥

— अहिंसा - सत्याऽस्तेयाऽपरिग्रहेतिनामकश्चातुर्यामोपदेशनमित्यर्थ. ।

१ सव्वातो पाणातिवायाओवेरमणं (सर्वतः प्राणातिपाततो विरमण)=अहिंसा

२ एव (सव्वातो मूसावायाओवेरमण (सर्वतो मृषावादतो विरमण) =सत्यम्

३ सव्वातो अदिन्नादाणाओवेरमण (सर्वतोऽदत्ताऽऽदानतो विरमणम्) अस्तेयम् =अचौर्यम्

४ सव्वातो वहिद्धाणा ओवेरमण(सर्वतो वहिर्धाऽऽदानाद् विरमणम्)=अपरिग्रह

५ स महावीर - इत्यर्थः

६. तस्य महावीरस्य पूर्वभवीयगाथा-पूर्वजन्मकथा-इति स्पष्टम् ।

-५२-

सप्तविंशति सङ्ख्याका उक्ताः पूर्वभवाः क्वचित् ।
ग्रन्थेषु केष्वपि तथा त्रयस्त्रिंशच्च वर्णिताः ॥

-५३-

[ख] विप्रस्यर्षभदत्तस्य 'जलन्धरे' तिगोत्रज–
देवानन्दाऽऽख्य-भार्याया गर्भमध्यागतो यदा ॥

-५४-

महावीर, स्तदादेवानन्दा स्वप्नांश्चतुर्दश ।
ददर्शेन्द्रश्च तद्गर्भादपहार्य सुपावनम् ॥

-५५-

'हरिणैगमेषि' - द्वारा वर्धमानस्य जीवमाः[1] ।
'सिद्धार्थ'-भूपदयितृ - त्रिशला-गर्भ आन्यधात् ॥

-५६-

[ग] आगते त्रिशला - गर्भं वर्धमाने च साप्यथो ।
तदाऽपश्यच्छुभान् स्वप्नान् चतुर्दश वा षोडश ॥

-५७-

मङ्गल-स्वप्न - वृन्दस्य त्वेतस्य जैन - वाङ्मये ।
अति विस्तृत - रूपेण कृतमास्ते सु - वर्णनम् ॥

-५८-

गर्भाऽऽगतेर्महावीर - जन्म - पर्यन्तमेव नु ।
सिद्धार्थ-भवने देवैर्मनुजैरपि चोत्सवाः ॥

१ जीवम् + आः इतिच्छेद

# श्री महावीर सौरभम्

## —: तृतीयः सर्ग :—

**मगध - विदेह - गणराज्ये :—**

-१-

सार्ध-सहस्र-द्वय-वत्सर मित-
समयात् प्राग् भारतवर्षे ।
'मगध'-विदेह'-नामके राज्ये
द्वेऽभूतामविरत - हर्षे ।
मगध-राजधान्यास राजगृह-
मथ विदेहगा[1] वैशाली ।
राजति यत्प्राक्तन इतिहासः
सुभृशमेव गौरव-शाली ।।

-२-

न्याय-नीति-शासन-व्यवस्था-
नागरिकाऽऽदर्शोद्धुरितम् ।
तज्जनतन्त्रं भारत - देशे
श्रेष्ठमभूत् सुरुचिर-चरितम् ।
सेय 'लिच्छवि' - राजवश-
नगरी सुभगा समभूत् प्रमुखा ।
गण-सत्ताकसुशासन - सहिता
सम-समृद्धि-सम्पत्-ससुखा ।।

---

१. विदेहगा - विदेहराज्यसम्बन्धिनी राजधानीत्यर्थः ।

–३–

निर्वाचित - नेतृत्वे शासन–
तन्त्रं तत्र प्रचलदभूत् ।
ईदृश-शासन - कर्तृणां, 'गण-
राज' - एतदभिधानमभूत् ।
नाममात्र - हेतवे नृपोऽभूद्-
गणराजानामनुमतितः–
एव राज्यकृतिशक्तस्सोऽभू-
ज्जनता-प्रतिनिधि-सम्मतितः ॥

–४–

तदा व्यराजत 'चेटक'-नामा
'वैशाली' - शुभ - शासकः ।
न्याय-नीति-निपुणःकृतिशीलो-
जन-जन-हित-समुपासकः ।
नव[1]-'लिच्छवि'-मय-मल्लराज-
भूपानामथाऽधिनायकः ।
श्रेयः-प्रेयः-सुमति-महित-कृति–
सद्गुण - गण - सन्धायकः ॥

१ नव-सख्याक-इत्यर्थ. । 'नव' - शब्दोऽत्र सख्यावाचक ।

जननी त्रिशला जनकस्सिद्धार्थश्च :—

–५–

तद्भगिनी 'त्रिशला'[1] तनया वा
'कुण्डलपुर' - इतिसद्ग्रामे ।
सिद्धार्थस्समुद्भवाँश्च,
निरुपमसुषमाविध्यभिरामे ।
क्षत्रिय–वंशसम्भवावास्ता-
मुभौ[2] दम्पती सानन्दम् ।
भगवत्पार्श्वनाथकृत–धार्मिक-
शासन - वृद्धौ चामन्दम् ।।

मात्रा त्रिशलया चतुर्दशानां षोडशानां वा स्वप्नानामवलोकनम् :—

–६–

एकदा त्रिशला राज्ञी निशि षोडश निद्रिता ।
चतुर्दशाऽथवा स्वप्नान् ददर्श शयनाऽऽश्रिता ।।

–७–

चतुर्दन्त गज श्वेतोन्नतस्कन्ध वृष तथा ।
समुच्छलन्त सिंहञ्च, मन्दार - कुसुम - स्रजम् ।।

–८–

सम्पूर्ण - चन्द्र - बिम्बञ्च समग्र - रवि- मण्डलम् ।
मत्स्यद्वय ददर्शाथ काञ्चन कलश–द्वयम् ।।

१ केषाञ्चिन्मतानुसारेण 'त्रिशला' राज्ञो महाराज-चेटकस्य भगिनी, केषाञ्चिच्च मतेन तनयेति मतद्वयसद्भावात् तथैव 'तद्भगिनी तनयावेति'-पाठोऽत्र विहित
२ महाराजस्सिद्धार्थो महाराज्ञो (तत्पत्नी) 'त्रिशला' चेति तावुभौ ।

-९-

तडागं वारिधिञ्च वाऽपश्यल्लक्ष्मीमथापि सा ।
उच्चं सिंहासनं, स्वर्ण - विमानं, नाग-सद्म च ॥

-१०-

भाण्डागारं मणीनाञ्च, निर्धूमं पावकं तथा ।
इतीत्थं षोडश स्वप्नान्, चतुर्दशाथवा च सा ॥

-११-

ददर्श त्रिशला माता भविष्यन्मङ्गलोत्कटान् ।
हर्षोन्मीलित - हृत्पद्मा तदानीञ्च व्यजायत ॥

-१२-

तत्फल गणकश्रेष्ठा - गूढतत्त्वानुशीलकाः ।
सुचिन्त्य सुपरीक्ष्येत्थ न्यगदन सूक्ष्म-दर्शिनः ॥

-१३-

मतान्तरानुसारेण राज्ञ्या पृष्टो नृपोत्तमः ।
सिद्धार्थ एव न्यगदद् बुधः स्वप्नफल स्वयम् ॥

-१४-

यत्-सिद्धार्थ-गृहे समोद-निवहे पुत्रस्समुत्पत्स्यते,
तेजस्वी कुल-दीपको गुण-गणैः क्षोणी-नभ.पूरकः ।
यस्यदाऽऽदर्श - समुज्ज्वलादनुपमव्यक्तित्वतो मङ्गलं
सर्वेषां विदधद् भरिष्यति नवा सच्चेतना भूतले ॥

महावीर - प्रभोर्जन्म —

-१५-

ख्रिस्ताब्दात्[1] प्राङ्नव-नव-त्र्यधिके शत-पञ्चके ।
वैक्रमे[2] चैत्र शुक्लस्य[3] त्रयोदश्यां गुरोर्दिने— ॥

-१६-

श्रीमान् सुशान्तश्श्रमणो महात्मा,
पवित्र-कुक्षे-'स्त्रिशला'-ऽऽत्मजातः ।
आप्नोन्महावीर इहानवद्य
जनुर्धरित्र्यां भगवान् कृपालुः ॥

प्रहर्षस्समजायत —

-१७-

तनय - जन्म - शुभ - वृत्तं श्रुत्वा
पुलकित - रोमा सिद्धार्थः ।
निस्सीम सुखमाप्नोत् सहसा-
ऽभवत् सञ्जयाऽसौ सार्थः ।
विविध-गान-मधुर-स्वर-लहरी-
मग्नमवनि—हृदयं जातम् ।
नाना - वाद्य - निनादैर्गगन
विगुञ्जित मुदित जातम् ॥

---

१ ख्रिस्ताब्दात् ५९९ वर्षेभ्यः पूर्वमित्यर्थः ।

२ वैक्रमे वर्षे-इति तात्पर्यम् ।

३. शुक्लस्य-शुक्ल,पक्षस्येत्यर्थः ।

नामकरणम् :—

–२०–

काञ्चनरजतधान्य–धन वर्षण–
मभिनो भव्य आजने
मणि-गण-हीरक-रत्न-समूह –
आस निनान्त राजते
इत्येव श्रीवृद्धि ज्ञात्वा
स्वगृहे सुतजन्मोत्सवम्
'वर्धमान'–इतिनाम विहितवान
जनकस्तस्य मनोहरम् ।।

–२१–

'सन्मति' आऽपि वीरश्च
'अतिवीरस्तथैव च ।
'महावीरो' ऽप्ययो जातः
क्रमेणाय सुविश्रुतः ।।

–२२–

अभूच्छुभेतद्भगिनी 'सुदर्शना'
तथाऽग्रजोऽप्यास च नन्दिवर्धनः ।
विवाह-संस्कारत आप्तवांस्तु य
प्रियां[1] मनोज्ञा नृप-चेटकात्मजाम् ।।

---

१ 'ज्येष्ठा'—नाम्नीमित्यवधेयम् ।

बाल्यकाल—वैशिष्ट्यम्—

-२३-

विविध-विभव-रम्ये राज-हर्म्ये स बालः
शुचि-रुचि-रचितैस्सत्साधनैःपोषितोऽभूत् ।
अनुपमकमनीयामानने शान्ति - कान्तिं
दधदतिबलशाली दिव्यतेजा रराज ॥

-२४-

सदय-हृदयमासीत् स्नेह-सान्द्रं तदीयं,
निभृतमथ गभीरा भावना ऽ भूदुदारा ।
निरवधि—सुखसम्पद्—गर्वशून्यो वदान्यः
सकल-सदृश-दर्शी बालको वर्धमानः ॥

-२५-

यथा - यथाऽवर्धत बाल एषः
शुक्लेन्दु—लेखेव तथा — तथैव ।
अमुष्य शौर्यं सविबोध — धैर्यं
सुयोग्यता चातितमां प्रसिद्धा ॥

-२६-

स शिष्टता — पण्डितता — विशिष्टता—
विवेक — विश्लेषण — वाग्विदग्धता —
गभीरता ऽ गर्वितता ऽऽ दि—सद्गुणै —
र्महा—मनीषी जगती—प्रियो ऽ भवत् ॥

-२७-

तन्मुखाब्जाज्जीवनस्य गहनानुभवोद्गताः ।
वाचःश्रुत्वाऽभवंस्तब्धा गभक्ष्ठा विबुधा अपि ॥

-२८-

तद्बुद्धि–वैभवोद्भूत–निसर्ग–प्रतिभा–बलात् ।
मनो जन–श्रनस्या ऽऽशु चमत्कृतमभूद् द्रुतम् ॥

-२९-

कुशाग्र–धिषणा–धन्यो मूर्धन्यो बुध–मण्डले ।
चमत्कारमयात् स्वीयाद् व्यक्तित्वात् न व्यरानत ॥

-३०-

सुरप्रदत्त स पवित्र भोज्य
भुङ्क्तेस्म; वासांसि सुरार्पितानि– ।
च पर्यधात्, बालक वर्धमानः
क्रीडारतो देवसुतैस्सहा ऽ भूत् ॥

इति श्री आचार्य मधुकरशास्त्रि–विरचिते
श्री महावीर-सौरभे तृतीयः सर्गः सम्पूर्तिमायात् ।



# श्री महावीर — गौरभम्

—: चतुर्थः सर्ग :—

स एवा ऽ भून्महावीर :—

-१-

धीर-प्रवीर-गम्भीर-प्रकृत्या स समन्वितः ।
साकार-प्रतिमैवाऽऽसीन्निर्भयत्वस्य सर्वदा ॥

-२-

तद्बाल्यकालशौर्यस्य घटनैका महाद्भुता ।
भव्येतिहास-पृष्ठेषु भ्राजमाना विराजते ॥

-३-

अथैकदोद्यान — गतस्ससमित्र :
क्रीडन्नभूद् — बालक — वर्धमान : ।
तदा सुरेन्द्रो ऽ कृत तत्प्रशसां[1] —
'देवा महावीर - समास्तु ने' ति ॥

-४-

देवस्तदा को ऽ पि समत्सरस्सन्
न प्रत्ययं प्राप महेन्द्र — वाचि ।
अतः परीक्षार्थममुष्य सो ऽ य —
मुद्यानमाप्नोद् धृत — सर्प — रूप : ॥

---

१—तत्प्रशसाम् —महावीर प्रशसानित्यर्थ. ।

-५-

अथो महावीर इतस्समित्र :
कस्यापि वृक्षस्य समीप एव ।
खेलन्नपश्यत् महसा प्रचण्डं
व्यालं भृशं फूत्कृतिभि : करालम् ॥

-६-

पलायिता वीक्ष्य समे वयस्या :
भीत – प्रभीता अथ कम्पमाना : ।
'पर' तमादाय तु वर्धमानो
दूरे क्वचिद् हृष्टमना मुमोच ॥

-७-

नाभूत् परं तस्य सुरस्य चित्ते
तोषो ऽ नया ऽ त्यद्भुतया प्रवृत्त्या ।
अतस्तदा तुल्य – वयस्य – रूपो —
ऽ खेलत् स 'तिन्दूशक' – खेलमाशु ॥

-८-

संस्थाप्य वीरं च सुर : स्वपृष्ठे
क्रीडावशात् प्राचलदेव भूमौ ।
स सप्त – 'ताड'[3] – प्रतिमो ऽ भवद्वै ,
माया—शरीरो वितत—खगात्रः ॥

---

१ —तम्-करालं व्यालमिति स्पष्टोर्थः ।
२—तिन्दूशक-इतिनामधेयक्रीडाविशेषमित्यर्थः ।
३– 'ताड' — नामकोवृक्षविशेषः ।

-९-

प्राबोधि मायामथ वर्धमान:,
मुष्टि – प्रहारं सुदृढं तदीये – ।
पृष्ठे व्यधात् स त्वत एव, देव —
श्चीत्कृत्य जातो लघुरूप एव ।।

-१०-

अथैकदा महावीरो व्यराजत स्व - सद्मनि ।
अन्विष्यमाणस्तन्मित्रैः परं प्राप्तो न तत्र तैः ।।

-११-

माताऽवोचत् — "उपर्यास्ते"
जनकोऽगद – 'दस्त्यधः' ।
परं स नोर्ध्वं नो नीचैः
प्राप्तो मध्य – प्रकोष्ठगः ।।

-१२-

वीरो वयस्यानवदत्-सत्यं मात्राऽभ्यधायि मे ।
पित्राऽपि च मृषा नोक्तं मित्रैः पृष्टं-कथं न्विति? ।।

-१३-

आह वीरो - 'यतोनाऽहं-निम्नश्रेणिगतोऽभवम् ।
अतस्सत्यं मातृ-गदितं उच्चैरासमहं न्विति' ।।

-२०-

अन्यास्वपि चेदृशीषु विकट-स्थितिषु न्वयम् ।
स्वनिर्भयत्व-शौर्याभ्या 'महावीरा'-भिधोऽभवत् ॥

-२१-

[1]तन्निर्भयता – वीरता कथास्त्वनेकास्सन्ति ।
श्रुति-परम्परा-विश्रुता या विपुला विलसन्ति ॥

-२२-

अतो 'महावीर'—इति प्रकाम—
मन्वर्थनामा स भुवि प्रसिद्धः ।
न काय-मात्रेण स आत्मनाऽपि
सत्यं 'महावीर' इहाऽभवच्च ॥

-२३-

तच्छरीरं समस्तेषु तीर्थङ्करेष्वभूल्लघु ।
परन्त्वभूदात्मनाऽसौ महावीरो महान् भृशम् ॥

-२४-

अतएव नु तेनात्र राज्य-सिंहासनात्मकम् ।
सुखैश्वर्यं परित्यक्तं वीतराग – महात्मना ॥

१ अस्मिन् पद्ये 'हिन्दी' भाषाया प्रसिद्ध 'दोहा' नामक मात्रिक छन्दः ।

-३७-

सानन्दं ससमारोहं सोल्लासं विधि-पूर्वकम् ।
पाणिग्रहण - संस्कार—स्तदीयस्समजायत ॥

-३८-

" अभून्महावीर - विवाह - बन्धनं
ततोऽस्य जातश्च गृहस्थ - जीवनम् ।
सुताऽपि जाता 'प्रियदर्शना' - ऽभिधा
तयोर्महावीर — यशोदयोस्तथा ॥ "

-३९-

इत्येवं श्री महावीरः पत्नी-पुत्री-समन्वितः ।
राज्यैश्वर्य-कुटुम्बाऽऽ-ढ्यं प्रारब्ध निज-जीवनम्

-४०-

राज - विभव - भव - सौख्य - साधनं,
महावीरस्याभिनस्तदासीत ।
माता - पित्रोः स्नेह - सुधाया —
स्सन्ततमथ वर्षणमासीत् ।
अनुपमनम्रज - 'नन्दिवर्धन' स्या —
ऽभूद् भ्रातृत्वं मधुरम् ।
रति - ललित - प्रियतम - नवपत्नी —
वाणी — वाम — सुखं नव्यं,'

-४१-

किं दुःखं कष्टश्च किम् ?
को ऽभावो भुवि नाम ? —
इति वेद स्वप्ने ऽपि स[1] न ;
गृह सकल — सुख — धाम ॥[2]

-४२-

परं विलास — सामग्री
नाशक्नोत् प्रचुरा ऽपि सा ।
महावीरस्य वैराग्य —
वृत्तीनां परिवर्तने ॥

-४३-

[3]तदात्म — तोषो ना ऽभवद् —
भोग — भरित — भुवने ऽपि ।
वीक्ष्य बहिस्सुखसाधनं
तदात्मना प्रावोचि — ॥

१—स. महावीरः

२—पद्ये ऽस्मिन् हिन्दी भाषाया दोहा – नामक छन्द ।

३—अस्मिन्नपि पद्ये दोहा नामकं छन्द ।

-४४-

"सुखदायी यदि विभव-विलास[1] —
स्तर्हीदं ननु नाऽद्य जगत् ।
अभविष्यद् विषमाधि — व्याधि —
द्वेष — दैन्य — दुःखानि दधत् ।"
भारतस्य सामाजिक — नैतिक —
धार्मिक — पतनं तद् — हृदयम् ।
नक्तन्दिनं विदधदासीद् बत !
शोकाऽशान्ति — ग्लानिमयम् ॥

-४५-

[2]सोऽवेक्षत — भीषण — तमो —
मग्नस्संसारोऽस्ति ।
नृत्यति हिंसा — राक्षसी
कथमपि नोद्धारोऽस्ति ॥

-४६-

केवलं वासना-पूर्त्ति-संलग्नस्स्वार्थ-साधकः ।
कुर्वन्नन्येष्वनाचारं क्षुद्रतां याति मानवः ॥

४—अत्र 'अभविष्यद्'-इत्यध्याह्रियते ।
२—'दोहा'-ऽभिधान छन्द ।

-६७-

[1]इतस्ततो ऽपि च सर्वतः करुण-कथैवाऽश्रावि ।
दुर्दशया कथमेतया हन्त! विततया ऽभावि ?

-६८-

इति समवेक्ष्य महावीरस्य
स्वान्तमशान्तमथाजायत ।
विचार-जगति सुचिर-जागरिता
क्रान्तिरहो! प्रबलाऽजायत ।
कृतो निश्चयो—'यत्-संसारा-
दुपरि मया प्रोत्थातव्यम् ।
क्षणे-क्षणे धरणी-त्राणार्थ
जीवनमिदं प्रदातव्यम् ॥

-६९-

[1] "शान्ति-सौख्य सद्भावना—
गङ्गा ऽऽनेतव्या ऽस्ति ।
अस्तु सकल-जन-जागतिक—
भूत-गणेभ्यःस्वस्ति ॥"

१—दोहा ऽभिधानं हिन्दी भाषा-छन्दः ।

-५४-

माता - पित्रोः स्नेह - वात्सल्य - रूपे,
आस्तां नूनं बन्धने द्वे प्रगाढे ।
यन्माहात्म्यात त्याग—वैराग्य—मार्गे
किञ्चित्कालं वर्धमानोऽवरुद्धः ॥

-५५-

परं यदा तत्पितरौ दिवङ्गतौ,
पुनस्तदानीं बलवत्तरोऽभवत् ।
सङ्कल्प [1]एतस्य विराग - रञ्जित :
निजोऽग्रजोऽबाधि च नन्दि-वर्धनः ॥

-५६-

प्रव्रज्या — प्रस्तावमाकर्ण्य तस्य
ज्येष्ठ—भ्रातुर्हन्तितान्तं व्यषीदत् ।
[2]सोऽवोचत्तं [3]रुद्ध—कण्ठ—स्वरेण—
"वैराग्यं ते नो महावीर! योग्यम्" ॥

---

१—एतस्य महावीरस्येति यावत् ।
२—स ज्येष्ठ भ्राता – नन्दि वर्धनः ।
३—तं महावीरम् ।

-५७-

— " माता – पित्रोर्वियोगस्या —
ऽश्रूणि शुष्कानि नाऽधुना ।
एतादृश्यां स्थितौ किं मां
त्यक्त्वा यासि त्वमप्यहो ! ॥

-५८-

मद्दृशां चिन्त गाम्भीर्यान्न मां मुञ्च तथैकलम् ।
राज्यकार्येषु साहाय्यमिदानीं कुरु मेऽनुज! ॥"

-५९-

— ज्येष्ठ – भ्रातुर्वाचमाकर्ण्य जोषं
भूयोऽवोचच्छ्रीमहावीर इत्थम् ।
" नैकाकी संसार–मध्येऽसि तात !
सर्वोऽप्यास्ते वः कुटुम्बः प्रजाश्च ॥ "

-६०-

किन्तत् कार्यं ? यत् सुसिध्येन्न चाऽऽर्य !
चेतोदार्ढ्यादात्म–शक्त्या च लोके ।
युष्मच्चिन्तां किं विदध्यामहं तु, —
स्वीयं लक्ष्यं नाऽस्मि विस्मर्तुमीशः ॥"

-६१-

— शासना ऽ पेक्षया ऽ न्येषु,
स्वस्मिन्नेव प्रशासनम् ।
कर्त्तुमिच्छाम्यहं मान्याः!
अत आज्ञा प्रदीयताम् ॥

-६२-

परन्तु बाधा समुपस्थितेतरा
प्रिया यशोदा ससुता समागता ।
विचार-गाम्भीर्य-गतं स्वकं पतिं
हृदा विखिन्ना विनयेन साऽब्रवीत् ॥

-६३-

"कथमेतद् भवेन्नाथ! त्यक्त्वाऽस्मान् यद् भवान्ननु ।
निर्गन्तुमिच्छति भृशं राज - प्रासादतोऽधुना ॥

-६४-

सुशोभेत कथं कान्त! रजनी शशिना विना? ।
भवन्निर्गमनोदन्त – कृतान्तो मां निकृन्तति ॥

-७०-

– "किमाः ! कुटुम्बे भविता त्वया विना
विधीयतां वै गृह एव साधना ।
न धर्म – मार्गे तव बाधका वयं[1]
न दुःख-मग्नान् कुरु नो विहाय हे ॥"

-७१-

महावीरो - ऽन्तर्विचार - वारिधौ मग्नतां गतः ।
कुर्वन् गम्भीर – मथनं नवनीतमिवाप्तवान् ॥

-७२-

— "कियत् प्रबलमत्रा ऽऽस्ते,
अहो ! स्नेहस्य बन्धनम् ।
प्रयते यावदुच्छेत्तुं
तावदेवैधते न्विदम् ॥

-७३-

— "अस्ति भोगावली – कर्म –
प्राबल्यं सुदृढं भुवि ।" —
इत्थं समाध्युत्थितस्स :
न्यगादीत् स्नेह – शान्तितः ॥

१— अत्र 'भविष्याम' – इत्यध्याह्रियताम् ।

-७४-

"चेत् स्नेह एवैष तु वो ऽ भविष्यत् —
गेहस्थितिस्तर्ह्युचिता ऽ भविष्यत् ।
'सो ऽ त्रा ऽ स्ति किन्तूत्कट—मोह—रूपे;
सुचिन्त्य देया ऽ नुमतिः किला ऽ तः ॥"

-७५-

द्वि—वर्षा ऽ वधि—गार्हस्थ्य —
भ्राता ऽऽ श्वासन – दानतः ।
पश्चा[illegible] ऽ कस्मात् —
[illegible]नायक — ॥

-७८-

इदं वर्षद्वयं यावद् यदुग्रं तप आदधौ ।
महावीरत्व—संसिद्धौ तद्रहस्यं तदीयमाः ।।

-७९-

सज्जीवनस्याग्निपथे प्रयातुं
हृदि प्रगाढा जनयत् पिपासाम् ।
सच्चेतनां स्फूर्तिमथो नवीना—
मिदं प्रदत्ते तप एव तीव्रम् ।।

-८०-

इत्येवं भोग—विभव—भरिते भवने ऽप्यसौ ।
निवसन् योग—युक्तात्मा तपस्वी समजायत ।।

[ख] दिगम्बर-परम्परा ऽनुसारेण भगवतो महावीरस्य विवाह-एव ना ऽभूद्; विवाहाग्रहं समुपेक्ष्यैव स प्रव्रज्यामधि-जग्राहेति निरूपणम् :—

-८१-

मतान्तरानुसारेण श्रीमहावीर – मानसे ।
दृढ—वैराग्य—सद्भावाद् वि ाहो नोररीकृत: ।।

-८२-

माता-पितृभ्यां वहु याचितोऽपि,
मुहुर्मुहुर्वै युव — वर्धमानः ।
स वन्धनं नैव विवाह — रूप —
मङ्गीचकार प्रसभं हठोऽभूत् ॥

-८३-

लक्ष्य-प्राप्तिं विना नैव विरमन्ति मनस्विनः ।
जागती भोग-सामग्री वशीकर्त्तुं न तान् क्षमा ॥

-८४-

एतन्मनानुसारेण त्रिंशदब्द — वयस्यसौ ।
अविवाहित एवाऽसौ! वीरः प्रव्रजितो वनम् ॥

चित्ते प्रगाढ-वैराग्यम् —

-८५-

ज्ञानध्यानत्याग — विराग — वीरं,
ह्यासीन्महावीर — मनस्युदारम् ।
[illegible] — स्वरूपं
मुक्तिन्तुतं पन्थविनं बभूव ॥

-८६-

भ्रातुर्निदेशं परिपालयन्त्स :,
वर्षंद्वयं यावदुवास गेहे।
परन्त्वनासक्तमनास्ससमासीत्
शून्यस्तथा भौतिक-वासनाभिः ॥

-८७-

गृह — प्रवृत्तौ — व्यरमन्न तन्मनः
हृदम्बुधौ प्रोन्मथनं व्यजायत।
विराग — चिन्ता — रतमेव वीक्ष्य तं
व्यचिन्तयन्त्सोऽग्रज-नन्दिवर्धनः ॥

इति श्री आचार्य मधुकरशास्त्रि–विरचिते
श्री महावीर-सौरभे चतुर्थः सर्गः सम्पूर्णः।



# श्री महावीर सौरभम्

—: पञ्चमः सर्गः :—

-१-

जगत्यहो ! नो रमते ऽस्य मानसं,
दिने दिने वृद्धि – युता तथाङ्गना।
तपोमयी संयम – साधनात्मिका
न तत्प्रवृत्तिश्च निरोद्धुमाः ! क्षमा ॥

गेहान्महाभिनिष्क्रम :—

-२-

सो ऽपरिग्रह—सम्पोषी दीन—हीन—विपद्गत—
जनेभ्यो व्यदधात्तूर्ण स्व—सर्वस्व—समर्पणम् ॥

-३-

[1]मार्गशीर्षे ऽसिते पक्षे दशमी—दिवसश्शुभः।
भारतीयेतिहासे ऽस्ति स्वर्णाक्षर—समङ्कितः ॥

---

१—ख्रिस्ताब्दात् ५६९ वत्सरेभ्यः प्राक्तनमार्गशीर्षमासस्या ऽसित-
पक्ष-दशम्यामित्यर्थः ।

-४-

दिने ऽस्मिन् राज-विभवं परिवार-सुखं महत् ।
सुभव्य-भोग-सामग्रीं स्वर्ग्यं मनोज्ञ-जीवनम् ॥

-५-

तदेतन्निखिलं त्यक्त्वा,
स्वस्या ऽन्येषां तथैव च — ।
कल्याणं कर्त्तुकामो ऽयं
महावीरो ऽभिनिर्गतः ॥

-६-

श्रमण – संस्कृतेर्भाषायामिह —
तामेतां स्थितिमनवद्याम् ।
चमत्कारमय – घटना – रूपां
जीवनस्य, निरुपम – हृद्याम् ।
व्यथित–विश्वजन–मङ्गल–जननं
वदन्ति हृदय – परिष्करणम् ।
'महावीर'–युग–पुरुष–सुविहितं
विबुधा महाभिनिष्क्रमणम् ॥

-१२-

प्रोचुरुच्चै राज-जनाः-"चाण्डाल! विरम् द्रुतम् ।
अस्पृश्यस्त्वं कुतः प्राप्तः? महावीरं न संस्पृश ॥

-१३-

परमित्येतदाकर्ण्य महावीरो ऽभणन्मुदा — ।
"मुञ्चता ऽऽयातुमध्वानं न रुन्ध हरिकेशिनम् ॥

-१४-

सर्वेऽपि चकिताः स्तब्धाः जना मौनमुपाश्रयन् ।
आगत्य पतितुं प्रैच्छद् "हरिकेशी' पदाब्जयोः ॥

-१५-

परं यदा महावीर उत्थाप्याऽऽलिङ्गदेव तम् ।
तदानीं कृतकृत्यो ऽसौ हरिकेशी व्यजायत ॥

-१६-

घटनैषा ऽद्भुतैवा ऽऽसीत् तद्युगे प्रथमैव च ।
यदेको राजपुत्रोऽयं चाण्डालं नु समाश्लिषत् ॥

१—श्री महावीर-पदाब्जयोरिति तात्पर्यम् ।

पूर्वमात्म-विशोधनम् :—

-२२-

अथ समुदेति प्रश्नो ऽ यं यत्
त्याग-तपस्या-संयम-वृत्तिम्।
संश्रित्यैव महावीर : किमु
नोदबोधयज्जगत्प्रवृत्तिम्।
धर्म्म-देशना ऽ मृत-तरङ्गिणी
किमिति तदैव न तेनाऽऽनीता ?
दीक्षाऽऽप्तेस्समकालमेव किमु
नाऽऽत्म-साधना-वागुद्गीता ?

-२३-

तदुत्तरं परं स्पष्टं
यत् साधक – शिरोमणि :।
स्वं विशोध्य महावीर —
ऐच्छद् विश्व – विशोधनम्॥

-२४-

आत्म-शोधनं विधाय यदवधि
न जनो जयति स्वकान् विकारान्।
उपदेशस्तदवधि विडम्बना
समाश्रितो ऽ पि तु बहु-प्रकारान्।

-२८-

"अतो विशद – रूपे वयं स्थितिमेतां पश्येम ।
महावीर - कृत - साधना-स्वभ्यसनाद् हृष्येम ॥

-२९-

दीपस्सूर्यायते शीघ्रं बिन्दुस्सिन्धूयते तथा ।
कणोऽपि च विराड्रूपं लभते साधना-बलात् ॥

-३०-

विकट – कष्ट – सङ्कटघाटो —
पाटनं साधनापथे प्रकामम्
तपोब्रह्मचर्या ऽ हिंसा ऽऽ तप —
हिम–सहिष्णुतास्तथा निकामम् ।
प्राण – घातिवन – जीवविहित —
विविधोपसर्गखलमनुजोत्पा न् ।
आत्मविजेता ऽ भवन्महा —
वीरस्सोढ्वाऽमित–घातोद्घातान् ॥

*–चिह्नाङ्किते पद्ये हिन्दीभाषाया प्रसिद्ध 'दोहा, ऽऽख्य छन्द .।

-३३-

प्रचण्डा ऽ नल—वर्षाभि—
द्यावाभूम्योः प्रतप्तयोः ।
ध्यानस्थ : प्राङ्गणेष्वेष :
प्रोत्थितस्तप आचरत् ॥

-३४-

विजने विपिने हिंस्र —
जन्तूत्कीर्णे प्रभीषणे ।
शीत-प्रकम्पना ऽऽ घाते —
ष्व प्रकम्पो ऽ भवत् स्थिरः ॥

-३५-

सगर्जमापतद् — वारि —
धारास्वविरतं स्थिर : ।
शान्त – स्वान्त – महावीर—
आत्मलीलो व्यराजत ॥

-३६-

स द्वादशा ऽ ब्दा ऽ वधि – मौनमाप्य,
व्रतैः कठोरैर्विविधैस्तपस्या —
वह्नौ निजं जीवन — काञ्चनन्तु,
प्रताप्य दिव्यं विमलञ्चकार ॥

# श्री मह ीर सौरभम्

—: षष्ठः सर्ग :—

शत्रावपि सुधा- णम् :—

-१-

स वर्धमानो ऽध्वनि साधनाया —
असोढ नाना — विकटा ऽन्तरायान् ।
उत्पात — हाहालाहलमेष किन्तु—
व्यधात् सुधां स्वाद्भु त-साम्य-योगात् ।।

-२-

विरोधि — वर्गानपि सः स्वकीय —
वात्सल्य—पूर्ण—क्षमया नितान्तम् ।
सर्वत्र सर्वानुपकृत्य वीरो[1] —
दधन्मनः स्नेह—मयं प्रशान्तम् ।।

-३-

अथैकदा महावीरो ध्यानस्थो ऽभूत् सरित्तटे ।
परितोऽपि वने रम्येऽलसद् धान्य-हरीतिमा ।।

---

१—वीरो – महावीर .।

-९-

चौर्या ऽऽ चार — विचाराभ्यां
गोपायित्वा वृषान्मम ।
इतस्ततः क्वा ऽ ऽ च्छन्नाः
इदानीं मोचिताश्च ते ॥

-१०-

इत्थं निगद्य गोपस्सः यष्टि–पाषाण–वर्षणैः ।
दण्डाघातैश्च दुश्शब्दैर्हन्तुमारब्ध तं[1] भृशम् ॥

-११-

महावीरः परं दान्तः शान्तश्च ध्यानमास्थितः ।
प्रसन्नाकृतिरेवा ऽऽसीत् नैव किञ्चिदभूद् यथा ॥

-१२-

एतद् दृष्ट्वा तु गोपालः पश्चात्तापवशम्वदः ।
दीनवाचा जगादेत्थं 'क्षम्योऽस्मि भगवन्! अहम् ॥'

-१३-

अज्ञानोऽस्मि जघन्योऽस्मि बुद्धिहीनोऽस्मि पामरः ।
मौर्ख्यान्मया कृतं पापं तद् भवान् क्षन्तुमर्हति ॥

१—तं महावीरम् ।

-१४-

सहज–प्रेम–क्षमा–निर्झरो —
महावीर – हृदये त्वासीत् ।
आततायि–जन–हेतोरपि य —
द्धिकारलेशो नैवासीत् ।
शान्तिकान्तिमयमनुपम — सदयं
व्यक्तित्वं तु महा — प्राणं ।
उवाच - "वत्स! लभस्व सन्मतिं
भवतु भूरं ते कल्याणम् ।।"

अन्तिम–वस्त्र–प्रदानम् —

-१५-

अपार — करुणा — पारा —
वारो वीरो व्यराजत ।
स्नेहागारः क्षमा — भाण्डा—
गार एव वभूव सः ।।

-१६-

तस्य मानवता – मूर्तेर्जीवनादर्श – रूपिणी ।
घटनैकातिसंक्षिप्ता क्रमे ऽस्मिन् परिदृश्यते ।।

-९-

चौर्या ऽऽ चार — विचाराभ्यां
गोपायित्वा वृषान्मम ।
इतस्ततः ा ऽ प्यवध्नाः
इदानीं मोचिताश्च ते ॥

-१०-

इत्थं निगद्य गोपस्सः यष्टि–पाषाण–वर्षणैः ।
दण्डाघातैश्च दुश्शब्दैर्हन्तुमारब्ध तं[1] भृशम् ॥

-११-

महावीरः परं दान्तः शान्तश्च ध्यानमास्थितः ।
प्रसन्नाकृतिरेवा ऽऽसीत् नैव किञ्चिदभूद् यथा ॥

-१२-

एतद् दृष्ट्वा तु गोपालः पश्चात्तापवशम्वदः ।
दीनवाचा जगादेत्थं 'क्षम्योऽस्मि भगवन्! अहम् ॥'

-१३-

अज्ञानोऽस्मि जघन्योऽस्मि बुद्धिहीनोऽस्मि पामरः ।
मौर्ख्यान्मया कृतं पापं तद् भवान् क्षन्तुमर्हति ॥

१—त महावीरम् ।

-१४-

सहज-प्रेम-क्षमा-निर्झरो —
महावीर - हृदये त्वासीत् ।
आततायि-जन-हेतोरपि य —
द्विकारलेशो नैवासीत् ।
शान्तिकान्तिमयमनुपम — सदयं
व्यक्तित्वं तु महा — प्राणं ।
उवाच - "वत्स! लभस्व सन्मतिं
भवतु भूरां ते कल्याणम् ।। "

अन्तिम-वस्त्र-प्रदानम् —

-१५-

अपार — करुणा — पारा —
वारो वीरो व्यराजत ।
स्नेहागार : क्षमा — भाण्डा—
गार एव बभूव सः ।।

-१६-

तस्य मानवता - मूर्तेर्जीवनादर्श - रूपिणी ।
घटनैकातिसंक्षिप्ता क्रमे ऽस्मिन् परिदर्श्यते ।।

-१७-

अथाऽऽसीत् काननं शून्यं वि   ं सघनं भृशम् ।
इतस्ततो हिंस्र - जन्तु - हुङ्कारैः परिगुञ्जितम् ॥

-१८-

असह्यश्शीतलो वायुः कम्पयन् देहिनोऽखिलान् ।
प्रावहद्; द्वन्द — निर्मुक्तो महावीरस्तथेह तु ॥

-१९-

ध्याने निमग्न एवा ऽऽस्ते तरु—मूलस्य स श्रये ।
तदा दारिद्रय-निष्पिष्टो ब्राह्मणः कोऽपि चाऽऽगतः ॥

-२०-

बिपद्ग्रस्तो भयत्रस्तो दुःख—गाथा निजामसौ ।
वर्णयन् निजगादेत्थं महावीरस्य सम्मुखे ॥

-२१-

भगवन् ! भवतो दान वर्णयेयं किमद्भुतम् ?
सत्यं वदान्य – मूर्धन्यो भवानत्र विराजते ॥

-२२-

—कृतास्त्वयात्यद्भुत—दान—वर्षाः
स्वर्णा ऽ न्नवासोरजता ऽऽ दि—रूपाः ।
परन्तु दुर्दैव – निपीडितो ऽ हम्—
मासं भ्रमन् क्वापि तदा प्रभो हे ! ॥

-२३-

गृहाऽऽगतेनाथ मया श्रुतं यद्
दत्वा स्व – सर्वस्वमरण्यवासी।
भिक्षुः स जातो ननु कल्पवृक्षः
परन्तु मद्भाग्य-घटोऽस्ति रिक्तः।

-२४-

खिन्नोऽस्म्यहं हे भगवन् ! दरिद्रः
गेहेऽस्ति मे नाऽन्नकणोऽपि नाथ !
क्षुधा कुटुम्बो म्रियमाण आस्ते,
त्रायस्व नावं प्रणिमग्नकल्पाम् ॥

-२५-

आसीत् समाधौ परिमग्न एव,
श्रीवर्धमानश्श्रमणस्तदानीम्।
भग्नं परं ब्राह्मण – धैर्य – सूत्रं—
ह्यभूदवोचत् स सवारिनेत्रः ॥

-२६-

हे दीनबन्धो! प्रणतार्तिहारिन्!
अनन्तवार्धेर्न तटेऽपि किम्मे –।
तृषा शमं यास्यति? पाहि नाथ!
दारिद्र्यकष्टात् परिपीडितोऽस्मि ॥

[

-२७-

आत्म – ध्यान – निलीनस्या –
ऽखण्ड – चिन्ता – रतस्य च ।
महावीरस्य हृदये
करुणा — स्रोत उद्गतम् ॥

-२८-

" भद्र ! मास्म विपन्नो भूः
न चाऽधीरत्वमाश्रय ।
शान्तिमावह, जीवने नो
सङ्घर्ष — कातरो भव ॥

-२९-

प्रत्युवाच स — " भगवन्
किं कुर्याम् ? – जीवनं तु मे ।
प्रतीयते भार — भूतं
दारिद्र्योपहते गृहे ॥ —

-३०-

— एतादृश्यामवस्थायां
क्व शान्तिः ! क्व च धैर्यमाः !
क्षुधाऽऽक्रन्दति गेहस्य
कोणः कोणोऽपि यत्र मे ॥

-३१-

सर्वतो ऽपि निराशो ऽस्मि ,
भवत्साहाय्यमात्रत : ।
एव मत्कष्ट — नाशस्य
शुभाशा मेऽस्ति चेतसि ॥

-३२-

अथोवाच महावीरो—"दयनीयो ऽसि वस्तुतः ।
भव्य ! किन्त्वधुनाऽशक्तः कां ते कुर्यां सहायताम् ?

-३३-

दीक्षा-काले चेत् त्वमत्रा ऽऽगमिष्यः
साहाय्यं ते तर्ह्यहं प्राचरिष्यम् ।
भिक्षुस्सोऽहं त्वद्य जातोऽस्म्यकिञ्चित्
दातुं पार्श्वे मे ऽस्ति किन्नाम बन्धो !"

-३४-

तेनोक्तं यन्नाथ ! भाग्योदयाद्धि ,
काले लाभो जायते मानवानाम् ।
चेत् स्यादद्या ऽप्युत्कटा वो दयादृक्
तर्हि स्युर्वं स्वर्ण—रत्न—प्रवर्षा : ॥

-२७-

आत्म – ध्यान – निलीनस्या –
ऽखण्ड – चिन्ता – रतस्य च।
महावीरस्य हृदये
करुणा — स्रोत उद्गतम् ॥

-२८-

" भद्र ! मास्म वि ो भूः
न चा ऽ धीरत्वमाश्रय।
शान्तिमावह, जीवने नो
सङ्घर्ष — कातरो भव ॥

-२९-

प्रत्युवाच स — " भगवन्
किं कुर्याम् ?– जीवनं तु मे।
प्रतीयते भार — भूतं
दारिद्र्योपहते गृहे ॥ —

-३०-

— एतादृश्यामवस्थायां
क्व शान्तिः ! क्व च धैर्यमाः !
क्षुधा ऽऽ क्रन्दति गेहस्य
कोणः कोणो ऽपि यत्र मे ॥

-३५-

"नैवं निगद्य", – भगवानभाणीत् —
'मत्सा । नो धन – वर्षणाय ।
सात्वस्ति सत्यस्य विशोधनाय
प्रोल्लङ्घ्य सीमां वद नैव भद्र !

-३६-

आकर्ण्य तद्वचो विप्रो भूयः प्राह विखिन्न-हृत् —
'भगवन् ! सत्यमेवैतद् धनायाऽऽस्ते न साधना" ।।

-३७-

— किन्तु, प्राप्याप्यत्र वै कल्पवृक्षं
नो दारिद्र्यं किं प्रणश्येन्मदीयम् ?
श्रीमद्धस्ताद् धन्य-धन्यात् प्रभो हे !
देयं किञ्चित् त्वद्य मे वस्तुजातम् ।।

-३८-

— तदेव खलु मे तूर्णं भाग्य–वैभव–वर्धकम् ।
भविष्यतीति विश्वासो नाऽत्र स्तोकोऽपि संशयः ।।

-४३-

अथै । निर्जर—राज इन्द्र :
उपस्थितो ऽ जायत तत्समक्षम्।
मुदा ऽ वदत् सानुनय – स्वरेण
"सेवा मदर्हा भगवन् ! निगद्या"।।

-४४-

"अनेक-विघ्ना ऽ दित-साधनो भवान् ,
बहूनि कष्टानि खलाः प्रकुर्वते ।
भवान् नु कः ?कां विदधाति साधनाम् ?
इति प्रबोधो न तदीय - मानसे ।।

-४५-

प्रभो ! निदेशो द्रुतमेव दीयताम्
उपस्थितोऽहं स्वयमेव सेवकः ।
न कोऽपि दुष्टो भवतोऽभ्युपैष्यति
न[1] चोपसर्गो भविताऽत्र कश्चन ।।

-४६-

दृढं महावीर उवाच – "साधक :
सुरेश ! साहाय्यमपेक्षते नहि ।
शरीर—कष्टक—बला : खलोद्यमा :
क्षमाः कदापि व्यथने न चाऽऽत्मनः ।।

१ —उपसर्ग – उत्पात इत्यर्थः ।

# श्री ह ीर सौरभम्

—: सप्तमः सर्ग :—

यक्ष – पश्चात्ताप :—

-१-

अथैकदा महावीर'स्त्वस्थिग्राम' – मुपा ॉ ।
स तत्र यक्षाऽऽयतनं शान्तमेकमुपावसत् ॥

-२-

प्रसिद्धमासीद्यत् — तत्र —
कोऽपि नैवोषितुं क्षमः ।
रात्राविति निशम्या ऽपि
वीरो यक्ष–गृहे ऽ वसत् ॥

-३-

गतास्सन्ध्याऽर्चना–पश्चाद् —
भक्ता : स्व-स्व-गृहान् प्रति ।
पूजकैः प्रार्थ्यमाणो ऽ पि
महावीरो ऽ गमन्न तु ॥

-९-

स्वयं पराजितो यक्षः पश्चात्तापाऽऽतुरोऽभवत् ।
ऽर्थनार्थं पतितो महावीर – पदाब्जयोः ॥

-१०-

अवदत् - "सत्यमेवाऽस्ति महावीर! महान् भवान् ।
पीडितोऽप्यसि शान्तो यत् क्षमस्व भगवन्! नु माम् ॥"

गरलादमृतं प्रति :—

-११-

दिव्यात्मनां स्नेह–मयी सुदृष्टिः
न केवल मानव-सीमि ऽऽस्ते ।
ते प्राणि—मात्रं करुणा—प्रपूर्ण—
नाऽऽत्मीय-भावेन विलोकयन्ति ॥

-१२-

अथैकदा तु भगवान् महावीरस्तपोनिधिः ।
[1]'वाचालां' जन्मासीद् गोपः कोऽपि ऽऽगतः ॥

१ – वाचालाम् – 'वाचालाम्' – नाम नगरीमित्याशय. ।

-१३-

मध्येमार्गं निरुध्याऽसौ, भीतश्श्रमणम[1]ब्रवीत् ।
"इतो महात्मन्! नो गच्छ! सर्पोऽस्त्यग्रे भयङ्करः ।।

-१४-

यस्य भीषण-फूत्कारान्मनुजाः पशवोऽपि च ।
विहङ्गमा नु जायन्ते निष्प्राणाः क्षणमात्रतः ।।

-१५-

,, इत्यतोऽपरमार्गेण गमनं वश्शुभावहम् । "
इति गोपाल-वचनं श्रुत्वाऽपि श्रमणस्त्वहो !

-१६-

ध्यानमग्नश्शान्तचेतास्तेनैव वर्त्मनाऽऽगमत् ।
तत्सर्पस्य बिल-द्वारे सोऽतिष्ठच्चात्मलीनवत् ।।

-१७-

विषमप्यमृतीकर्त्तुं मद्यमङ्गल — कामना ।
समुत्पन्ना महावीर-मानसेऽभूत् सुमङ्गला ।।

१—श्रमण महावीरमिति यावत् ।

-१८-

क्षणानन्तरमेवाऽत्र, कश्चित् काल — भुजङ्गमः ।
विषानल-घनान् मुञ्चन्भीषणो निर्गतो बि ात् ।।

-१९-

'चण्डकौशिक'–नामाऽयं सर्प आस भयङ्करः ।
यमवेक्ष्य महावीरः समीपं शान्त आययौ ।।

-२०-

दंष्ट्राऽऽघात प्रकुपितश्चकार 'चण्ड—कौशिकः' ।
महावीर—प्रभोः पादे; बभूव विस्मितः परम् ।।

-२१-

तत्पदाब्जाद् दुग्ध - धारा प्रावहत् सहसा यतः ।
आश्चर्य-चकितो भूत्वा व्यपश्यच्चण्ड-कौशिकः ।।

-२२-

करुणार्द्र – मनाः प्राह सर्पं तञ्चण्ड कौशिकम् ।
महावीर :-"सर्प ! नाना-जन्म-दुष्कर्म-कारणात्—।।

-२३-

त्वमस्यां पतितो योनौ [1]'सरीसृप' इहाऽभवः ।
इयं खलु महापाप—परिणामोद्भवा तनुः ।।

[1]—सरीसृपस्सर्पः ।

-२४-

"तथापि सर्प ! कुरुषे नाशलीला—कुकृत्यमाः !
पाप – कृत्यस्य चैतस्य त्वन्न वेत्सि फलन्ननु ॥

-२५-

महावीरस्य सदयैश्शब्दैरेतैस्तु मानसम् ।
'चण्डकौशिक'-सर्पस्य सम्प्राप्नोत् परिवर्तनम् ॥

-२६-

सुषुप्तस्तु यथा कश्चिन्निद्रातो जागृयाद् द्रुतम् ।
तथा प्रबोधं संप्राप्या ऽजागरीच्चण्डकौशिकः ॥

-२७-

चकार दृष्टिपातं सः स्व—पूर्व—जीवनंप्रति ।
आत्मग्लानि—व्याकुलश्च तदाऽजायत तन्मनः ॥

-२८-

महावीराद् भगवतो मङ्गलाढ्या शुभाशिषम् ।
प्राप्य तत्याज हिंसा सः तद्दिनादेव सर्वथा ॥

-२९-

श्रमणस्य सुधा - सिक्तं सन्देशं वाप्य सर्पराट्[1] ।
ज्ञान—ज्योतिस्समासाद्य चिन्तनोन्मग्नतां ययौ ॥

१—सर्पराट – 'चण्डकौशिक'—नामा सर्पवरः ।

-३०-

ततः प्रभृत्येष भयावहं स्वं
　　विषोत्कटं रूपमथोत्ससर्ज ।
कमप्यहो! नाऽव्यथयत् कदापि
　　प्रेमामृतञ्चात्मनि सन्दधार ॥

इति श्री आचार्य मधुकरशास्त्रि-विरचिते
श्री महावीर-सौरभे सप्तमः सर्गः सम्पूर्णः ।



-३-

इति प्रचिन्त्याऽऽशुजगाम 'सङ्गमो—
वनस्थलीं श्री श्रमणस्य सन्निधौ ।
अमानवं दुष्कृतिजालमेष तु
विरच्य विघ्नान् व्यदधादनेकशः ॥

-४-

तपो—निमग्नः श्रमणोऽधं—वर्ष
यावद्दुराचार—कुकर्म—जालम् ।
नाना—विधं तद्विहितं प्रघोरं
सर्वंसहो नैषदपि व्यचिन्तत् ॥

-५-

श्रमणं वीक्ष्य दुर्देवः स सुमेरुमिवाचलम् ।
सर्वदुर्वृत्ति-सम्भारान् प्रयोज्य विश्लथोऽभवत् ॥

-६-

स्वां प्रतिष्ठां पातुकामः[1] सोऽन्ते दम्भभृत-स्वरः ।
निजगाद महावीरं "क्षमस्व भगवन्! अघम् ॥"

-७-

भवतस्साधना – मार्गे सतत विघ्न – कारकः ।
सञ्जातोऽहमिदानीं तु विचारितमिदं मया —

१—पातुकामः – रक्षितुमना – इत्यर्थः ।

-८-

"यत् कस्यचित् सज्जनस्य पीडनं नोचितं किल ।
किमहं स्यां भवद्विघ्नो? यामि; चिन्ततु नो भवान् ॥

-९-

इत्याकर्ण्य महावीरो व्याऽऽर्द्र-हृदयोऽभवत ।
दृग्युगादनुकम्पाया: कुधाम्भ - उपोद्गतः ॥

-१०-

सङ्गमोऽचिन्तयत्-किञ्चिद् हार्दं कष्टं भयानकम् ।
विद्यते श्रमणस्यास्येत्यवोचत् स तपोनिधिम् ॥

-११-

(सङ्गमः -) "किमस्ति वार्ता? किमधीर आः! प्रभो!
(महावीरः -) मनोव्यथा मे, वरागा न तेऽस्ति ।
(सङ्गमः -) यतिष्यते नाथ! यथेच्छमादिश,
बल न मे वेत्स्यहमस्मि निर्जरः ॥

-१२-

(महावीरः -) वच्मि दुःख मानसं मे -
शृणुष्व सुर - 'सङ्गम' !
षण्मासावधि — मत्कष्ट —
हेतोः प्रयतितं त्वया ॥

-१३-

घोरः परिश्रमो जातः किन्तु कष्टन्न मेऽभवत् ।
इत्येतावत्यपि प्रोग्रा चिन्ता त्वेकास्ति मद्धृदि ।।

-१४-

— सा चेयं यद् धाष्टर्यतो यत् —
पापमाचरितं त्वया ।
तद् — दुष्फल — प्राप्ति — काले
किं त्व देव ! करिष्यसि ?

-१५-

"तत्तेऽन्धकार—सम्पूर्ण भविष्यत्कालिकं फलम् ।
साक्षात् पश्याम्यहं देव ! उद्विग्नोऽस्मि ह्यतो भृशम् ।।"

-१६-

किञ्चाऽहतेऽत्र सञ्जातोऽस्म्यधः पतन—कारणम् ।
किं स्यादितोऽधिक दुःखमित्याह श्रमणः प्रभुः ।।

-१७-

इत्याकर्ण्य व्रीडितसङ्गमोऽभूत्
'पापी क्वाऽहं, दु ख—दग्धस्तथाऽसौ— ।
अस्मद्धेतोः कुत्र सौजन्य-मूर्तिः?
दासोऽह ते; पाहि—पाहि प्रभो ! माम् ।।

**गोशालक–प्राणरक्षा :—**

–१८–

ज्ञात्वायातोऽसौ 'विहार' – प्रसङ्गा —
नालन्दायां 'राजगेहस्य'[1] पार्श्वे ।
तत्राऽवात्सीत् तन्तुवायस्य गेहे,
कस्याऽप्येष[2] त्वाब्दिकाऽऽवास हेतोः ॥

–१९–

तत्र 'गोशालको' नाम्ना युवा 'मङ्खस्व'-जातिकः ।
भिक्षुश्चातुर्मास्य—हेतोः स्थित आसीत् तपोरतः ॥

–२०–

महावीर — तपश्चर्यामात्मतेजस्तथाऽद्भुतम् ।
वीक्ष्य 'गोशालको'ऽत्यन्तं व्यजायत प्रभावितः ॥

–२१–

अतोऽस्य चरणाम्भोज – युगं नत्वाऽभ्यधादसौ ।
"भवतां शिष्यता प्राप्तुमुत्सुकोऽहं भृशं प्रभो !

---

१—राजगृहस्येत्यभिप्रायः । विहार प्रान्ते 'राजगृह – नाम प्राचीन सुप्रसिद्ध नगरम् ।

२—'वर्षावास' – निमित्तमित्यर्थः ।

-२२-

अन्तेऽस्य शिष्यत्वमवाप्तवान् सः
जातश्च [1]वीरानुगतो नितान्तम् ।
परं प्रकृत्या चपलस्तु भिक्षुः
सदोपहासादिरतोऽभवत् सः ॥

-२३-

अथैकदा महावीर मनुगच्छन् पथि क्वचित् ।
गोशालकस्तपोमग्नं मुनिं कञ्चन दृष्टवान् ॥

-२४-

जटाभ्योऽधो निपतिता असौ यूकाः पुनः पुनः ।
निदधद् वै जटास्वेवाऽऽसीत् प्रसन्नमना भृशम् ॥

-२५-

तदद्भुतं दृश्यमवेक्ष्य चञ्चलः
स्वकप्रकृत्या विवशस्तमब्रवीत् ।
"किमस्ति नैपुण्यमहो ! यतो भवान्
जटासु यूका भरति क्षणे-क्षणे ॥

१ – महावीरानुगत – इत्याशयः ।

-२६-

स सोपहासन्तु यदा तपस्विनं,
मुहुर्मुहुः प्रव्यथितं व्यधादिह।
तदाऽभवत् क्षुब्ध-मनामुनिर्भृशं,
शशाक सोढुं न तदीय-धृष्टताम् ॥

-२७-

'तेजोलेश्या' साधुना प्रोज्झिताऽऽशु
भस्मीकर्त्तुं तत्र गोशालकञ्च ।
आचक्रन्दोद्दाम — पीडाभितप्तः
चीत्कारञ्च प्रोच्चनादे चकार ॥

-२८-

प्रभुर्महावीर इदं समग्रं
वृत्तं परावर्त्त्य मुखं व्यपाश्यत् ।
तूर्णं दयाक्लिन्नमनाश्च जातो
दृष्ट्वाऽत्र 'गोशालक'-दुर्दशां सः ॥

-२९-

"शीतल — लेश्यायास्तदा
शुभः प्रयोगोऽकारि[1] ।
'गोशालक' – कष्टाऽनलो —
परिपतित हिम – वारि[2]॥

इति श्री आचार्य मधुकरशास्त्रि–विरचिते
श्रीमहावीर-सौरभेऽष्टमः सर्गः सम्पूर्णः ।



१—भगवता श्री महावीरस्वामिना 'शीतललेश्यायाः' प्रयोगो विहित – इत्यर्थः ।
२—पद्येऽस्मिन् 'दोहा' – ऽभिध हिन्दीच्छन्दः ।

# श्री महावीर सौरभम्

—: नवमः सर्ग :—

चन्दनवाला — मुक्तिनीः —

-१-

'चम्पा'-भूपसुता राज-कुमारी 'चन्दना'[१]ह्यभूत् ।
'कौशाम्बी'-भूपतिश्चम्पा-पुर्यामाक्रमणं व्यधात् ॥

-२-

'कौशाम्बी' विजयो जातो युद्धे चम्पा-पराजयः ।
शत्रु-हस्ते निपतिता 'चन्दना' जननी-युता ॥

-३-

रथात् सकूर्द्य तत्याज स्वप्राणाश्चन्दनाऽम्बिका[२] ।
चन्दनां स्वगृहं किन्तु ह्यनैषीद् रिपु-सैनिकः ॥

---

१—'चन्दनवाला' इति ।

२—चन्दनवालाया जननी – इत्यर्थः ।

-४-

सैनिकश्चन्दनां नीत्वा राजमार्गं गतो द्रु ् ।
'धनावह'-श्रेष्ठि-हस्ते व्यक्रीणाद् धन-हेतवे ॥

-५-

दिने - दिने चन्दनाया वयोवृद्धिर्व्यजायत ।
सारल्यं मार्दवश्चास्यां सलावण्यं व्यराजत ॥

-६-

अतो निसर्ग-स्नेहस्तां प्रति श्रेष्ठि-मनस्यभूत् ।
परमस्यां स्थितौ तस्य[1]पत्नी शङ्काकुलाऽभवत् ॥

-७-

अतो गृहाद् बहिर्याते सा श्रेष्ठिन्यथ चन्दनाम् ।
पाणि - पादे निगडितां विधाय मुण्डितामहो !

-८-

न्यपातयत् तलगृहे वन्दिनीं विवशां व्यधात् ।
प्रत्यागत्य श्रेष्ठ्यपृच्छ'च्चन्दना क्वे'ति' तां तदा ॥

१—तस्य 'धनावहा' - ऽभिधस्य श्रेष्ठिन पत्नीत्यर्थः ।

–९–

एना दासी स्थितिं सर्वां भीतेवाऽकथयद् द्रुतम् ।
[1]श्रेष्ठी विज्ञाय तद्वृत्तं करुणा-विह्वलोऽभवत् ॥

–१०–

इतः साधना–रत–श्रमण–हृदि[2]
स्वतोऽभवद् दृढ—निश्चयः ।
यन्नृप—कन्या यास्ति कुमारी
यस्याः श्रेष्ठश्चरित—चयः ।
पाणि–पादमपि निष्पापाया —
यस्या निगडितमस्ति दृढं ।
मुण्डित–शीर्षा दिनत्रयाद् दधती
ह्युपवासं सुपरिवृढम् ॥

–११–

[3]'पक्वकुलत्थ'-कणान शूर्प-स्थान्
धृत्वा या न बहिर्न गृहे ।
स्थिता स्मितारया चाऽश्रुजलं
परिपूर्यं निजे दृग्युगेऽस्पृहे ।

१—श्रेष्ठो धनावहः ।
२—श्रमणहृदि – महावीरमानसे इत्यर्थः ।
३ —'पक्वकुलत्थकणान्' "पकी हुई कुलथी के बाकलों को" इत्यर्थो हिन्द्याम् ।

सा स्वभो ाद् राजकुमारी
यदि मह्यं भि ं ात् ।
तर्ह्याहारं करि ामि न —
न्वहं तदंशादनवद्यात् ॥

-१३-

नोचेदेवं विधो भैक्ष्या —
ऽऽहारः प्राप्येत जातुचित् ।
निराहारो भविष्यामि
षण्मासावधि तर्ह्यहम् ॥"

-१४-

तपः कृशो महावीरो – भिक्षार्थं पर्यटन् भुवि ।
दातार तु परं वीक्ष्य 'तूर्णां' प्रति न्यवर्त्तत ॥

-१५-

सेप संयोग – वार्त्ताऽभूद् यदाहारस्य हेतवे ।
महावीरोऽत्र नगरे[2] वारं – वारं समाययौ ॥

१—किञ्चिदप्यनादायैवाग्रे प्रचलति स्मेति तात्पर्यम् ।
२—'कौशाम्वी' – त्यभिधे नगर – इत्यभिप्राय. ।

-१६-

परं प्रतिज्ञा – सम्पूर्तेः सर्वा वार्ता न लब्धवान् ।
अतो विनव चाहारं सदा प्रतिन्यवर्त्तत ॥

-१७-

स्व – साधना – रतश्चायं प्रतिवारमजायत ।
परमद्य यदा सेयं 'चन्दना' बन्धनाऽऽतुरा – ॥

-१८-

आसीन्निपतिता खिन्ना, श्रेष्ठिनी–प्रहितं ननु - ।
तुच्छं भोजनमादाय महावीरार्पणाय सा ॥

-१९-

तदैवाऽहो ! महावीरः प्रभुस्तात्र दिशम्प्रति ।
समाजगाम सौभाग्याच्चन्दनाया दयानिधिः ॥

-२०-

पञ्चमासाः पञ्चविंशत्यहानि च गतान्यथ ।
निराहारस्य तस्येत्थं तपस्या – प्रवण – प्रभोः ॥

-२१-

विराजमानं किन्त्वासीत् तदीय–मुख–मण्डले ।
आत्मोल्लास-महाज्योतिः प्रदीप्त सुतपोमयम् ॥

-२२-

तेजो – निधिर्भैक्ष्य — हेतोर्महावीरस्तपोधनः ।
'धनावहा'ऽभिधस्याऽसौ श्रेष्ठिनो द्वारमाययौ ॥

-२३-

तत्र शूर्पं समादाय कुलत्थ – कण – पूरितम् ।
स्थिता 'चन्दनबाला'ऽऽसीदभ्यागत-प्रतीक्षणे ॥

-२४-

तमुद्वीक्ष्य महाभिक्षुमायान्तं स्व–दिशम्प्रति ।
तस्याश्चन्दन – बालाया हृदब्जं सममोदत ॥

-२५-

प्रभुश्चन्दन – बालायास्समक्षं समुपाययौ ।
प्रायोऽभिग्रह–सम्पूर्तिं तत्रापश्यत्; परन्त्वभूत्-॥

-२६-

"किञ्चिन्नैयून्यमपि यत् - न नेत्र - युगलं त्वभूत् ।
तदा चन्दनबालाया अश्रुवारि – प्रपूरितम् ॥

-२७-

वीक्ष्येमां न्यूनतां तूर्णं निजाभिग्रह – हेतवे ।
महावीरश्च तद्–द्वारात् प्रत्यगच्छत् तपोधनः ॥

-२८-

दृष्ट्वाऽतिथिं निज – द्वाराद् —
रिक्त—हस्तं गतं द्रुतम् ।
अभूच्चन्दन — वालाया —
अश्रु – क्लिन्नं नु दृग्युगम् ॥

-२९-

सा विनम्र – स्वरेणाऽऽह —
निरुद्ध – गलतः प्रभुम् ।
भगवन् ! कोऽपराधो मे ?
यासि रिक्त करो यतः ॥

-३०-

महावीरः परावृत्य यदाऽपश्यत्तदा मनः— ।
पद्मश्चन्दन — वालायाः समुत्फुल्लमजायत ॥

-३१-

निराशा-व्यथिते चित्ते चाशाज्योतिर्व्यजृम्भत ।
अक्ष्णोरश्रूणि वदने [1]स्मिताऽऽभा च व्यराजत ॥

---

१—चन्दनवालाया – इत्यर्थः ।

-३२-

स्वं सुकृतिनीं मत्वा महावीर—प्रभुं द्रुतम् ।
तुच्छाहारं ग्रहीतुं तं विनताऽऽमन्त्रित व्यधात् ॥

-३३-

स्वीचकार महावीरश्चन्दनाऽऽमन्त्रणं प्रभुः ।
तद्दत्तञ्च स आहारं जग्राह त्वरितं शुभम् ॥

-३४-

आश्चर्योद्वलिता जाता द्रष्टारो निखिला जनाः ।
महावीर—प्रतिज्ञाऽद्य सफलेति न ते विदुः ॥

-३५-

'चन्दना'—वन्दना चाऽपि सफला व्यजायत ।
महावीराय साऽऽहारं दत्वा धन्याऽभवद् यतः ॥

-३६-

महावीरस्य शिष्यात्व गृहीतं श्रद्धया तया ।
तच्छिष्य-वर्गे सा जाता मुख्या साध्वी 'मनस्विनी' ॥

इति श्री आचार्य मधुकरशास्त्रि—विरचिते
श्रीमहावीर-सौरभे नवमः सर्गः समाप्तः ।



# श्री महावीर – सौरभम्

## —: दशमः सर्गः :—

केवल – ज्ञान – सम्प्राप्ति :—

–१–

आत्मज्ञानाऽऽपूरितं सत्प्रकाशं
प्राप्तु सार्ध–द्वादशाऽब्दाऽवधौ तु ।
उग्रे श्रेष्ठे–साधना–सत्पथेऽत्रौ
आसाऽऽज्ञ वर्धमानो महात्मा ॥

–२–

अथैकदा तपोमग्नो महावीरो महामतिः ।
'जृम्भि'–नामग्राम–पार्श्वे [1]ऋजुकूला–सरित्तटे ॥

–३–

क्षेत्रस्थ – शाल – वृक्षाऽधो —
'गोदोहना'ऽऽख्य आसने — ।
ध्यान – चिन्तन – सँल्लीनः
स्थितोऽभूच्छान्त – मानसः ॥

---

१—'ऋजुवाला'–ऋजुपाला इत्यपि वा सरितोऽस्या नामोपलभ्यते ।

-४-

तपश्चर्या - ाभ्यां प्रक्षाल मनोमलम् ।
आत्म-निर्मन्थनश्चाऽऽसीत् परां-सीमामुपा म् ॥

-५-

अथो स ाख-गते सिते दले,
तिथौ दशम्यां श्रमणो महातपाः ।
अवाप साक्षादिह दिव्य-केवल -
मनुत्तमं ज्ञानमयं प्रकाशमाः ॥

-६-

केवल-ज्ञानवान् सोऽभूत् प्राप्त-'केवल'-दर्शनः ।
हृत्कपाट - प्रावरण — प्रणाशस्समजायत ॥

-७-

तस्यान्तरात्मनि ज्ञान—महास्रोतस्समुद्गतम् ।
तत्कृते नाऽवशिष्टश्च ज्ञातव्यन्नाम किञ्चन ॥

-८-

उग्रा तस्य तपश्चर्या सफलाऽभूत् तपस्विन : ।
सिद्धिं प्राप्यैव सम्पूर्णां विरमन्ति मनस्विनः ॥

-९-

स ततोऽद्य महावीरो जैन-संस्कृति-वाचि सः ।
'अर्हन्' वै 'केवल-ज्ञानी' जिनश्चेति-सुनामवान् ॥

-१०-

यस्मिन् दिने केवल-ज्योति—
-र्दर्शनमाप्नोज्जिनस्त्वयम् ।
तद्दिनमासीन्मानवतायाः —
कृते सुमङ्गलमोदमयम् ।
यतस्तदानीमेको मनुजो —
दृढ – पुरुषार्थ – साधनाभ्याम् ।
जीवनस्य सर्वोच्च—शिखरमधि –
रूढस्तपस्संयमाभ्याम् ॥

-११-

'अथाऽ'पापा'-पुरीमध्ये धनी 'सोमल' नामकः ।
कश्चिद् विप्रो महायज्ञा-ऽऽयोजनं कृतवांस्तदा ॥

---

*—'पावापुरी' – त्यपि नामोपलभ्यते । तथा सति – 'अथो पावापुरी मध्ये' इति पाठोऽनुसन्धेयः ।

-१२-

तत्र विख्यात - नामानो विद्वांसस्समुपागताः ।
इन्द्रभूतिर्गौतमाख्य [1]स्तेष्वासीच्चाधिनायकः ॥

-१३-

महावीरेण दृष्टं यद् हिंसा तत्र निरन्तरम् ।
निरीह - पशु - वृन्दस्य, यज्ञार्थं प्रविधीयते ॥

-१४-

'धर्म' – नाम्ना तदेतत्तु पातकं क्रियते महत् ।
अज्ञान–तिमिराऽऽच्छन्नस्समाजस्सर्व एव च ॥

-१५-

कैवल्यमाप्यैव जिनोऽत एव
'पावापुरी'—मध्यगतस्तदानीम् ।
व्यधात्स यज्ञेषु विधीयमान –
हिंसा—विरोधं सुदृढं महात्मा ॥

-१६-

यस्स्वार्थ - हेतोः पर - हिंसनेऽत्र
प्रवर्त्तते वै मनुजः स पापी ।
घोरेऽन्धकारे परिमग्न आस्ते
न जीव-हिंसाऽऽचरणं विधेयम् ॥

१—"तेष्वभूत् प्रमुखो बुध" इति पाठान्तरम् ।

-१७-

मतं महावीर इदं निजं यदा
स्फुटं बभाषेऽखिल-यज्ञ-मण्डपे ।
सहस्रशस्तत्र तदा नु मानवाः
प्रहर्षमग्नाः परितोऽप्यथाऽभवन् ॥

-१८-

श्रद्धा – बद्धाऽऽदरान् सर्वान्
श्रमणं प्रति मानवान् ।
वीक्ष्य गौतम – चित्तेऽभूद् —
द्रुतं दर्पोदयो महान् ॥

-१९-

सोऽचिन्तयत् पण्डितताभिमानी,
"शास्त्रार्थमध्ये श्रमणस्य तीव्रम् ।
पराजयं शीघ्रमहं करिष्ये –"
न्विति प्रयातस्स्वकशिष्ययुक्तः ॥

-२०-

प्रकट-विकट-तर्कैः पण्डितैश्शास्त्र-दक्षैः
सहित इह तदानीं गौतमस्तीक्ष्ण—तेजाः ।
समवशरण-मध्ये श्री जिनस्याधियातः
श्रमण-चरण-तेजो वीक्षणाद् विस्मितोऽभूत् ॥

-२१-

"सुस्वागत गौतम ! ते सुविद्वन् !"
इत्थं यदा श्री जिन आजुहाव ।
तदा व्यचिन्तद् हृदि गौतमोऽयं
"अह तु ससार-सुविश्रुतोऽस्मि ॥"

-२२-

अतो जिनश्चेन्मम नाम वेत्ति—
नाऽऽश्चर्य - वार्ता ननु तर्हि काऽपि ।
कुतोऽपि सोऽय मम भूप्रसिद्धं
श्रुत्वाऽद्य नामात्र वदत्यथेति ॥

-२३-

मदन्तर्मनसिच्छन्नं संशयश्चेद् व्यपोहयेत् ।
तदाऽहन्तु विजानीयां सम्यज्ज्ञानी जिनोन्विति ॥

-२४-

सङ्कल्पोऽयश्चलन्नासीद् यदा गौतम—मानसे ।
स्व-गम्भीर-गिराऽभाणीत् तदा श्री श्रमणःस्फुटम् ॥

-२५-

आत्मनोऽस्तित्वमास्ते वा ?नाऽऽस्ते वेति च संशयः ।
चिरकालाद् भ्रमन्नस्ति त्वच्चित्ते ननु गौतम !

-२६-

शृणुशङ्का-समाधानं सावधान-मना ननु — ।
अस्त्यात्मा,-चित्स्वरूपोविज्ञान-संज्ञादि-लक्षणः ।।

-२७-

आत्मसत्ता न चेद् भूयात् तर्हि पात्रं भवेच्च कः ।
धर्माऽधर्म-सौख्य-दुःख-शुभाशुभादि-कर्मणाम् ।।

-२८-

इत्थं श्रमण-वाणीतो ज्ञान-गङ्गा प्रवाहिता ।
आत्म-सम्बन्धिनी, चेतो निमग्नं गौतमस्य च ।।

-२९-

प्रोद्भग्ना हृदयग्रन्थिः प्रोच्छिन्नस्संशयो द्रुतम् ।
व्यगलद्ज्ञान—गर्वश्च गौतमस्य तदा त्वहो !

-३०-

आत्मज्ञान-तृषा तीव्रा गौतमस्य व्यजायत ।
भक्ति 'गद्गद'-चेतास्सोऽवोचत् सविनयं जिनम् ।।

-३१-

घोरान्धकारे भगवन् ! अद्य यावदहं त्विह ।
दन्द्रम्यमाणो व्यभ्राम्यमभद्र—पथगोऽभवम् ।।

-३२-

अद्य-सत्य-ज्ञान-रश्मिसंस्पर्शात् परिवर्तिता — ।
अस्मज्जीवन-दिग्, देहि शरणं पादयोः प्रभो ! ।।

-३३-

ज्ञानदीप – शिखायां स इत्थं शि गणानि : ।
प्रदीप्तायां गौतमोऽभूत् पतङ्ग – सहशोऽर्पितः ।।

-३४-

अहिंसा–धर्म–विजयस्सोऽयम तमोऽभवत् ।
यद्वशान्निखिलो विश्वो विस्मितस्समजायत ।।

-३५-

हिंसा – महापादप – मूलमित्थं
हालाहलोग्रं परितोऽच्छिनत् सः ।
"जगत्यहिंसा परमोऽस्ति धर्मः"
सर्वत्र वाक्यं तदिदं व्यगुञ्जत् ।।

इति श्री आचार्य मधुकरशास्त्रि–विरचिते
श्रीमहावीर-सौरभे दशमः सर्गः समाप्तः ।



# श्री हीर सौरभम्

—: एकादशः सर्गः :—

जनस्य सेवाऽस्ति जिनस्य सेवा :—

–१–

अवाप्तवान् केवल - दर्शनं जिनः
स केवल-ज्ञान-विशुद्ध-मानसः ।
व्यध वाऽऽलोक-विभासितं जग-
न्निरन्तरं मानव-मङ्गलेच्छुकः ॥

–२–

भ्रामं - भ्राम श्री जिनस्सर्वतोऽपि
त्रिंशत्संख्यासम्मिताब्दाऽवधौ सः ।
कुर्वन्नासीत् सन्ततं विश्व—सेवां
दिव्यात्मानो लोक-कल्याण-लग्नाः ॥

–३–

अत्रैकः परिसम्वादः संक्षेपेण निरूप्यते ।
यद्वशाद् विषयस्सोऽयं सुस्पष्टो जायते भृशम् ॥

-४-

एकदा चिन्तनोन्मग्न— सस्संस्थितस्य तु ।
इन्द्रभूतेर्गौतमस्य सम्प्रश्नो हृद्यजायत ॥

-५-

प्रश्नं ाधातुमनास्तदानीं
उत्थाय स श्रीजिन-पाद-पार्श्वे ।
गत्वाऽभिवन्द्याऽतिविनम्र-भावा—
दुवाच-"शङ्का भगवन्! अपास्या" ॥

-६-

प्रभो! जनो यो भवतस्सपर्या -
संलग्न-चित्तोऽविरतन्त्विहाऽस्ति ।
सदा भ ाम - जपं प्रकुर्वन्
नित्यं स्तुतिं ते विनतः करोति ॥

७-

मुदा भवद्दर्शन - मग्न आस्ते
त्वद्वाक्सुधा पान-परोऽनिशञ्च ।
खिन्नान् वि ान् रुदतश्च दीनान्
न किन्तु दृष्ट्वा स दयार्द्रचित्तः ॥

-८-

सर्व-साहाय्य-सामर्थ्य-युक्तोऽपि स भवत्स्तुतिम् ।
त्यक्त्वा खिन्नजनांस्त्रातुं समयं नैव गच्छति ।।

-९-

अपरस्तु नरस्सोऽस्ति यच्चितेऽस्ति भवत्कृते ।
श्रद्धा भक्तिश्च विपुला परं त्वद्दर्शनाय सः ।।

-१०-

समयं नैव लभते वाक्सुधा-पान-हेतवे — ।
न चाऽवकाशस्तस्याऽस्ति भक्ति-युक्त-मनास्स तु ।

-११-

दीनान् विपन्नान् व्यथितान् जनान् सः
वीक्ष्याऽस्ति नित्यं करुणार्द्रचित्तः ।
सहायता — कर्म तदर्थमेव
कुर्वन् स्वकालं नियतं ददाति ।।

-१२-

उभयोरनयोर्मध्ये जनयो र्भगवन् ! ननु — ।
कतरोऽस्ति प्रियो नाम ? सानुकम्पं प्रभो! भण ।।

-१३-

रहस्य – – मुद्रायामवदद् युग – पूरुषः ।
ि ो 'गौतम! स्सः यो दीन-जन-सेवकः' ।।

-१४-

क्रन् ो यो जनस्याऽत्र प्रोञ्छत्यश्रुजलं पुमान् ।
स्नेह–सान्द्रेण सा स एवाऽस्ति प्रियः ।।

-१५-

त्रिलोकीनाथ! भवान्? ते मन्दा जगज्जनाः?
त्वद्भक्तचग्रे का नु तेषां सेवेति गौतमोऽब्रवीत् ।।

-१६-

शान्तस्वान्त–मयः सम्चित्प्रवणः श्रमणः प्रभुः ।
स्फुटीकुर्वन् गू र्थ्यं गौतमं पुनरब्रवीत् ।।

-१७-

"इन्द्रभूते! व्यक्ति-सेवा न मे जात्वपि रोचते ।
र्चैव ि र्चाऽस्ति तैव जनार्दनः ।।

-१८-

अ त्सेवा विद्यते दनुशा – पालनम् ।
दीनानां दुःखिनां सेवा चाऽऽस्ते मदनुशा म् ।।

-१९-

सर्वदाऽभय–दानेन प्रेम्णा करुणया तथा ।
अनाथाः पीडिताः खिन्ना र ीया जना इह ॥

-२०-

य आर्तमादं शृणुते; सोऽस्मद्वाणीं शृणोति वै ।
यःस्नेहात् खिन्न-मनुजान् वीक्षते सर्वशः समान् ॥

-२१-

मन्नाम–मात्रं प्ररटन् केवलं चर्म–नेत्रतः – ।
मद्दर्शनं प्रकुर्वाणो जनो मे नैव सेवकः ॥

-२२-

असौ हि जन–सेवायां जिन–सेवा–स्वरूप–भृत् ।
नर – नारायणाऽर्चाया भव्यादर्शो विराजते ॥

-२३-

प्राप्योत्तरं गौरवपूर्णमेतत् –
शङ्का गता गौतम-चित्त-सस्था ।
आत्मद्यु ति–प्रस्फुरणान्वितान्त
प्रज्ञाततत्त्वोऽभवदिन्द्रभूतिः ॥

इति श्री-आचार्य–मधुकरशास्त्रि–विरचिते
श्रीमहावीर-सौरभे एकादशः सर्गः समाप्तः ।

❀— इन्द्र–भूतिर्गौतम–इत्यभिप्रायः ।

# श्री महावीर सौरभम्

—: द्वादशः सर्गः :—

सत्यस्य प्रखरो वक्ता :—

-१-

महावीरस्तु भगवान् प्रखरः सत्य—भाषकः ।
आस सत्यान्वेषणेऽसौ निष्पक्षस्सुदृढस्तथा ॥

-२-

कामं कश्चिद् भवेद् रुष्टः तुष्टो वाप्यस्तु कश्चन ।
न तु श्रमण—वाण्याऽभूदसत्य—भाषणोद्भवः ॥

-३-

असत्यस्य विरोधी सः सत्यस्य प्रतिपालकः ।
कियानासेति विषये घटनैका निरूप्यते ॥

-४-

भक्तोऽभूत् कौणिकः सम्राट् श्रमणस्य प्रभोः परः ।
मध्ये विराट्सभं सोऽयं सम्पप्रच्छैकदा जिनम्[1] ॥

-५-

"भगवन् ! क्व गमिष्यामि मृत्वाऽहं भुवनादितः ।
इति प्रश्नं समाकर्ण्य महावीरोऽभ्यभाषत" ॥

---

१—जिनम् – महावीरमिति यावत् ।

-६-

शृणु कौणिक! तथ्यं, त्वद् भविष्यत्तु तमोमयम्।
मृत्वा त्वं नरके षष्ठे निपतिष्यसि निश्चितम्॥

-७-

कौणिकः प्राह-"हे नाथ!त्वद्भक्तो नरके पतेत्?"
जिन आह-"कुतो भक्तोऽसि स्वकर्माणि तु स्मर"॥

-८-

पितरं वन्दिनं कृत्वा भ्रातृद्वयमपाहरः।
मातामहश्चेटकाख्य निर्दयं हतवान् भवान्॥

-९-

भ्रातृणां प्राण-हरणेऽप्युद्युक्तोऽभूस्त्वमा; ! दृढम्।
इमानि पाप-कृत्यानि स्वानि स्मरसि नो किमु?

-१०-

त्रिकाल—सत्यं तदिद "शुभ—कर्मफलं शुभम्'।
अशुभस्य तु कृत्यस्य फलमप्यशुभं सदा॥

-११-

सत्य पिधातुन्नो शक्य सत्य मिथ्या च नो भवेत्।
अत्याचाराऽन्याय-कर्म-फल त्वाप्स्यसि कौणिक!

-१२-

"अतश्शुभा न पश्यामि मरणान्ते तव स्थितिम्।
[२]दुष्कर्म—फल—भोगेन विना मुक्तिर्यतोऽस्ति नो"॥

---

१—"सुचिण्णा कम्मा सुचिण्णा फला हवति, दुचिण्णा कम्मा दुचिण्णा फला हवति"। [ आचाराङ्गम् ]

२—"कडाणकम्माण न मोक्ख अत्थि" — उत्तरा ०४।३

-१३-

श्रुत्वाऽप्रत्याशितां वाचं महावीर-मुखोद्गताम् ।
कौणिकश्चेतसि स्वीये नितान्तं व्रीडितोऽभवत् ॥

-१४-

असौ विचि[illegible] ासीद्य तु प्राप्स्यते ा ।
ाण-पत्रं स्नर्गस्य महावीरात् प्रभोश्शुभम् ॥

-१५-

क्षालितो मेऽद्य भविता जीवने प्राप्त-कालिमा ।
इत्थं विचारयँश्चित्ते कौणिको मुदितोऽभवत् ॥

-१६-

परं सत्य-स्वरूपोऽसौ भगवांञ्छ्रमणस्तु नो ।
स्वभक्तपक्षमादाय सत्य - प्रच्छन्नतां व्यधात् ॥

-१७-

लज्जितः कौणिकस्त्वग्रे भक्तेर्मिथ्या-प्रद[illegible]म् ।
धर्मिता-नाटकञ्चापि कर्त्तुं नो प्राभवत् पुनः ॥

-१८-

सत्यस्य सः प्रज्वलितः प्रदीपः
सदा प्रभुः श्री श्रमणो बभूव ।
आसीत् प्रियं तस्य च सत्य-मात्रं
न कोऽपि मर्त्यो न च कोऽपि भक्तः ॥

इति श्री आचार्य मधुकरशास्त्रि-विरचिते
श्रीमहावीर-सौरभे द्वादशः सर्गः समाप्तः ।

# श्री हा ीर सौरभम्

## —: त्रयोदशः सर्गः :—

निर्वाणम् :—

-१-

अथो महावीर-विशाल-जीवने,
दृगर्पणश्चेद् विशदं विधीयते ।
हृदि प्रबोधो भवितैष तर्हि यद्-
युगान्तर-क्रान्तिमसौ भुवि व्यधात् ॥

-२-

यद्धेतोः केवल-ज्ञान-महा-प्रकाश-लब्धितः ।
पश्चादपि दूर - दूरं पदातिः परितोऽभ्रमत् ॥

-३-

स्वान्तर्लोकस्थ-तेजोयुक्-प्रकाश-किरणैर्भुवि ।
तमो-विलुप्त-तथ्यानां विदधे सः प्रकाशनम् ॥

-४-

'"पावा-पुरी-भूपति-हस्तिपालो -
भक्तः प्रभोरास पवित्र-चित्तः ।
तस्याऽऽग्रहं वीक्ष्य दृढं महान्तं
तत्राऽऽगतश्श्री श्रमणस्तदानीम्" ॥

---

१—'अपापा' पुरीत्यभिधाया पुर्या अपभ्रंश-पदमिदं प्रतिभाति ।

–५–

वर्षाव सम्व्यधात् तत्र सोऽन्त्यं
चातुर्मास्ये सार्धमासत्रयं तु — ।
प्रायः पूर्णं; कार्तिकीया ह्यमाऽभूत्
स्वाती-नक्षत्रोद्भवश्च प्रभातम् ।।

–६–

स्वान्त्यं कालं श्रीजिनोऽवेक्ष्य जोषं
द्वेऽह्नी यावद् वाक्सुधायाः प्रवाहम् ।
कृत्वा तीव्रं लोक-कल्याण-हेतो—
रात्मज्ञानज्योतिरापूरयत् सः ।।

–७–

आसस्तदानीं नव–'मल्लि'–भूपा,
नवाऽप्यहो! लिच्छवि-भूमिपाश्च ।
अष्टादशेमे - 'गणराज' - नाम्ना
ख्याता, व्रत 'प्रौषध'[1]- नामधेयम्- ।।

–८–

विधाय, तस्माद् युग—पूरुषाद् वै
ज्ञानश्रुति-प्राप्ति-रता अभूवन् !
स्वयं जिनोऽप्यास तदोपवास—
परायणो हन्त! दिन द्वयस्य ।।

१—"पौषध" इत्यर्थं ।

-९-

सहस्रशो दर्शन-वाञ्छका जनाः
पथि ह्यधावन् श्रमणप्रभुं प्रति ।
विधाय तत्पाद-युगाभिवन्दनं
कृतार्थतामापुरमन्द-मुद्[1]-युताः ॥

-१०-

एतावति प्रोल्लसिते सुकाले
अहो! अकस्मात् स महा प्रकाशः ।
अदृश्यतां लौकिक - लोचनेभ्यः
प्राप्यनोदथो शाश्वत-धर्म-हेतोः ॥

-११-

वर्षं द्विसप्ततितमं प्रभुश्रीश्रमणाग्रणः ।
तदा प्रचलदेवाऽऽसीत् सुभव्येऽवनि-मण्डले ॥

-१२-

सेयं जिन-महायात्रा-जैन-वाण्यामिहोच्यते ।
'निर्वाण'-मिति नाम्नाऽथ 'परिनिर्वाण'-नामतः[2] ॥

-१३-

निर्वाण' - शब्द स्यार्थोऽस्ति,
ह्यात्म - शान्तिस्सुखाण्वती ।
अजराऽमराऽक्षय्य - दिव्य—
पद - प्राप्तिरसनातनी ॥

१—"मुत्प्रीतिः प्रमदो हर्षः" - अमरः ।
२—सञ्ज्ञया ।

उपसंहार :—

-१४-

नग्ना नृत्यत्यद्य हिंसा—दानवी भुवि सर्वतः ।
समाज-विषमत्वाख्यो राक्षसोऽभ तु सुखम् ॥

-१५-

अन्यायशशोषणं तीव्रअत्याचारः प्रपीडनम् ।
इतीदं दुष्ट-दुश्चक्रं दृश्यते परितो यत् — ॥

-१६-

त ैत महाव्याधेरुपचार—महौषधम् ।
अहिंसा—सत्य—रूपन्नो महावीरः प्र वान् ॥

-१७-

तद्राष्ट्रं सर्वशः श्रेष्ठं, यत्सुतास्सुखिनो बुधाः ।
दया-सेवा-स्नेह-निष्ठा-सत्याऽहिंसा-रतास्सदा ॥

-१८-

सर्वश्रेष्ठो मानवस्सः विद्यते राष्ट्र—वर्धकः ।
यः समस्त-स्व-कर्तव्य-पालने निरतो दृढम् ॥

-१९-

इति तत्त्व–समासेन महावीरो न आदिशत् ।
ससारः स्वर्ग एव स्यात् क्रियेत यदि पालनम् ॥

-२०-

युग—पुरुष-श्रमणस्य जन्मना
धन्या भारत—धरणिः ।
तच्चरितं शुभ-दिशं प्रदास्यति
यावद् गगने तरणिः ॥
कृति-मूढो जन आप्स्यति सत्या—
ऽहिंसा — मार्गमशोकम् ।
अन्धकार—परिमग्न—मनुजता
प्राप्स्यति नवमालोकम् ॥

-२१-

इतीत्थं श्रीमहावीर - चरितं सुमनोरमम् ।
विदुषां सर्वधर्मैक्य-निबद्ध-चे ां दृढम् — ॥

-२२-

जायतां प्रीतये नित्यं जगतां सौख्यसम्भृतम् ।
संयमञ्च सुवृत्तञ्च सौमनस्यञ्च सन्ददत् ॥

-२३-

*'राजस्थाने' 'जयपुरा' दुत्तर दिशि परिभाति
'रामपुरा'—ग्रामो लघुः 'चौमू'—प्रत्यायाति ॥

*—हिन्दी भाषाया प्रसिद्ध 'दोहा' – नामक छन्दः ।

-२४-

तत्रत्य – बुध – जोषि – श्री
" गीलाला"ऽऽत्मजस्त्विव ।
ग्रन्थं " मधुकरश्शास्त्री "
व्यतनोद्[1]वीर–सौरभम् ॥

-२५-

त्रिंशत्संख्याधिके वर्षे सहस्रद्वयसम्मिते ।
वैक्रमे, फाल्गुने मासि पौर्ण स्यां शुभे दिने[2]॥

-२६-

'शास्त्री मधुकराचार्य्यो' –
ग्रन्थमेतं प्रणीतवान् ।
सर्वेभ्यस्स्वस्ति लोकेभ्यो —
भूयाद् भारतमङ्गलम् ॥

इति श्री आचार्य–मधुकरशास्त्रिविरचिते
श्रीमहावीर-सौरभे त्रयोदशः सर्गः समाप्तः ।



१—"महावीर-सौरभ" – मिति तात्पर्यम् ।
२—'भृगौ दिने' – इति वा ।

# श्री हीर सौरभम्

—: चतुर्दशः सर्गः :—

[ उपदेशपरम्परा – १ ]

–१–

[1]महावीर–शिष्या बुधा–'गणधर'–नामतोऽत्र ।
विततमकुर्वन् भूतले 'जिन'–तत्त्वं सर्वत्र ॥

–२–

महावीर—काले तदीयोपदेशाः
विभक्ताः क्रमाद् विज्ञ–शिष्यैस्तदीयैः ।
अहो ! द्वादशस्वत्र भागेष्वभूवन्
इमे 'द्वादशाङ्गी'–तिनाम्ना प्रसिद्धाः ॥

–३–

[2]तद्व्यतिरिक्त — ग्रन्थगा —
ये ह्युपदेशास्सन्ति — ।
ते 'ऽङ्गबाह्य' – नाम्ना समे
विख्याता विलसन्ति ॥

---

१—पद्येऽस्मिन् दोहाभिध हिन्दीभाषाच्छन्द ।
२—अत्रा-युग्मयुक्तमेवच्छन्द ।

–४–

अ र्यः स्थूल स्तु निर्वाण न्तरं प्रभोः ।
षष्टयु त्तरैकशतके वर्षाणां विगते व्यधात् ।।

–५–

श्रमण-श्रेष्ठ-सञ्जुष्टां सभां पाटलि-पुत्रके[1] ।
तत्राऽऽकार्षीदयं विज्ञ 'एकादशाङ्ग'-सङ्ग्रहम् ।।

–६–

ततोऽशीत्यधिके चतुश्शततमे शुभम् ।
'आचार्य'-स्कन्दिलेनात्र सम्मेलनं व्यधायि वै ।।

–७–

तत्पश्चाद् 'वलभी'-मध्ये श्रीनागार्जुन-सूरिणा ।
[2]मुनि-सम्मेलनं श्रेष्ठं कृतमागम-रक्षणम् ।।

–८–

ततो नवशतेऽशीति-वर्षाऽधिके पुनः कृता ।
निर्वाणात् परतो भव्या [3]'वलभी'-नगरे सभा ।।

१—पाटलिपुत्राभिधे नगर-इत्यर्थ. ।

२—तदिद सम्मेलन 'मथुरा'-नगर्यामजायत ।

३—सेय मुनिमहासभा 'वलभी'-नगरे देवर्धि-गणिक्षमाश्रमणद्वारा समायोजिता ।

अङ्गान्येकादशोपाङ्गान्यथो द्वादश, वै दश – ।
प्रकीर्णकानि, षडथ–च्छेद सूत्राणि तत्र तु ॥

–१०–

चत्वारि मूलसूत्राणि चूलिका–सूत्र–सद्द्वयम् ।
इतीत्थं श्रीमहावीर—प्रभूपदेश—सङ्ग्रहः– ॥

–११–

तस्मिन् सम्मेलने सम्यग् लिपि-बद्धो व्यजायत ।
एतेषामुपदेशानां भाषाऽर्धं – मागधी मता ॥

–१२–

उक्तोपदेश – साहित्य महावीर – प्रभोर्ननु ।
जैवनं तत्त्वमध्येतुमस्ति प्रमुख – साधनम् ॥

जगद् दृश्यमदृश्यञ्च :—

–१३–

महावीर–मतेनैतद् दृश्याऽदृश्यमयं जगद् — ।
निर्मितं स्वयमेवाऽऽस्ते नाऽस्ति कर्ताऽस्य कश्चन ॥

–१४–

संसार–रचना–कारि, महावीरो ब्रवीति च ।
मूलभूत–द्रव्य–षट्क तदधोऽत्र प्रदर्श्यते ॥

-१५-

'जीवो'ऽथ 'पुद्गलो' धर्मः,
'ह्यधर्मः' 'ख' तथैव च ।
अन्त्यः ' ल'-स्तथा ज्ञेयः,
इति द्रव्याणि षड् ध्रुवम् ॥

-१६-

इमान्येवाऽत्र संसारे सन्ति द्रव्याणि केवलम् ।
यैरिदं रचितं विश्वं द्रव्यमन्यन्न विद्यते ॥

-१७-

शास्त्रेषु विस्तरात् सोऽयं विषयः परिबृंहितः ।
अतो दिङ्.मात्रमेवात्र प्रोक्तं तद्विषये मतम् ॥

ईश्वर आत्मा च परमात्मा च :—

-१८-

महावीर-मतेनाऽत्र प्रत्येकं जीव एव तु ।
ईश्वरोऽस्ति स्वयं स्वस्य स्वयम्भूः सर्वशक्तिमान् ॥

-१९-

स आत्मगुण—सम्पूर्णं विकासं कुरुते स्वयम् ।
कर्म-बन्धन-निर्मुक्तस्ततो मोक्षं समश्नुते ॥

-२०-

परमात्मेत्थमात्मैव प्रत्येकं भव्यतां गतः ।
तदनन्त-गुणास्तस्मिन् स्वतः प्रादुर्भवन्ति च ॥

आत्मोत्थानस्य भूमिका :—

-२१-

स्वविकासाद् व्यक्तिरेव 'परमात्मा'-कथम्भवेत्?
इतीमां प्रक्रियां पूर्णां महावीरः समुक्तवान् ॥

-२२-

सोपान-त्रय मादिष्टं तेनात्मोऽऽत्थान-हेतवे ।
'रत्नत्रय'-मितिख्यातं यन्नूनं जैन-वाङ्मये ॥

-२३-

'सम्यग्दर्शन'-माद्यन्तु 'सम्यग्ज्ञान'-मथापरम् ।
'सम्यक्चारित्र्य'-मन्त्यञ्च, प्राणभूतमिदं त्रयम् ॥

-२४-

एतत्त्रयस्य संयोगान्मुक्तिमार्गो विरच्यते ।
एकैकस्याऽपि वैगुण्ये मुक्ति-प्राप्तिरसम्भवा ॥

-२६-

' क्चारित्र्य'-विषयं महावीरः सविस्तरम् ।
अभ्यधात् स्वोपदेशेषु जोवनाऽ रवद् ध्रुवम् ।।

-२७-

' यक्चारित्र्य'—संल्लाभात्
जीवनस्याऽखिला अपि ।
[1]समाधीयन्त आश्वेव[2]
समस्याः कठिना इह ।।

-२८-

सम्यक्चारित्र्यतो व्यक्तेः प्रभावो व्यापको भवन् ।
प्रोज्ज्वलं कुरुते नित्यं सर्वं समाज-जीवनम् ।।

-२९-

धार्मिकं, ह्यार्थिकं राजनीतिकं वाऽपि जीवनम् ।
सम्यक्चारित्र्य-संशुद्धं राष्ट्रोत्थान करं सदा ।।

विचार-मूल-आचार :—

-३०-

महावीर-प्रभु-प्रोक्तोपर्युक्ताऽऽचार-संहिता — ।
मूले विचार-संशुद्धिरनिवार्य्या प्रवर्त्तते ।।

१—'समाधीयन्ते'-इति ज्ञेयम् ।
२—आशु-एवेतिच्छेद. ।

अनेकान्त-सिद्धान्त :—

-३१-

अत आचारतः प्राक् सः विचार-क्रान्ति-हेतवे- ।
नितान्त-प्रमुखं प्रादादनेकान्ताऽऽख्य-चिन्तनम् ॥

- २-

एषोऽनेकान्त-सिद्धान्त एव त्वाधार-भूमिका ।
जैनस्य दर्शनस्याऽऽस्ते वस्तु-स्वरूप-दर्शिका ॥

-३३-

न काचिद् दृष्टिरप्यत्र वस्तु-तत्त्वं व्यनक्ति वै ।
तदीयाऽनन्त-धर्माणां परिज्ञानमृते भुवि ॥

-३४-

अनन्त-धर्मात्मकमस्ति लोके
प्रत्येकमप्यत्र तु वस्तु-जातम् ।
तद्रूपमाख्यातुमतो न किञ्चिद्—
एकान्ततो रूपमिहास्ति चान्त्यम् ॥

-३५-

अतोऽनेकान्त-सिद्धान्त-भावना भव्य-रूपिणी ।
शास्त्रीय-ग्रन्थ-साहाय्याद् विद्वद्द्वारा तथोह्यताम् ॥

द्वादः :—

-३६-

वक्ति प्रभुर्महावीरो यदनेकान्त-मूलक — ।
विचारायानिवार्योऽस्ति स्याद्वादस्य समाश्रयः ॥

-३७-

अतो यदा वस्तुनस्तुह्येकः कश्चिद् विविच्यते ।
पक्षस्तदा तदर्थैव दृष्टिरावश्यकी मता ॥

-३८-

"एकेनाऽऽकर्षन्ती श्लथयन्तो वस्तुतत्त्वमितरेण ।
अन्त्येन जयति जैनी नीतिर्मन्थान-गोत्रमिव गोपी" ॥

इति श्री-आचार्य-मधुकरशास्त्रि-विरचिते
श्रीमहावीर-सौरभे चतुर्दशः सर्गः समाप्तः ।



५-स्यादस्त क्तव्यम्

६-स्यान्नास्त्यवक्तव्यम्

७-स्यादस्तिनास्त्य व्यम्" — इति ।।

-३-

ि स्यास्य विशदं प्रतिपादनमाप्यताम् — ।
जैनशास्त्रग्रन्थ-राशे-स्साहाय्यात् तज्ज्ञ-सश्रयात् ।।

-४-

सेयं त्वनेकान्त–विचार–दृष्टिः
ससार–सङ्घर्ष-निवारिकाऽऽस्ते ।
योऽत्राऽस्त्यनेकान्त-विचार-कारी
स्याद्वादभाषी च-जगत्प्रियस्सः ।।

-५-

अनेकान्त—विचारेण स्याद्वादभाषया तथा ।
जायते व्यक्ति–चारित्र्यं मर्यादित व्यवस्थितम् ।।

जीवनाऽऽचार–सहिता :—

-६-

विचार—मूलकाऽऽचार–हेतवे श्रमण–प्रभुः ।
प्राहाऽऽचार–सहिता यां तन्मूले व्रत–पञ्चकम् ।।

३—अस्तेयम् :—

-१२-

(क)— अचौर्याऽणु-व्रती चौर्यं
नैवाऽचरति कर्हिचित् ।
चोरितं वस्तु नाऽऽदत्ते[1]
विक्रये न च वञ्चति ॥

-१३-

(ख)— दुर्भिक्ष-युद्ध-कालाऽऽदौ
सस्थिते राष्ट्र-सङ्कटे ।
नाऽधिक लाभमादातु
कुरुते मूल्य—वर्धनम् ॥

४—ब्रह्मचर्यम् :—

-१४-

परस्त्री-गणिका-सङ्गाद् विरक्ताः सर्वथा सदा ।
ब्रह्मचर्याऽणुव्रती तु काम—तीव्राभिवेगजिद् ॥

५—अपरिग्रह :—

-१५-

स्वस्याऽऽवश्यक वस्तूना परिमाणं सुनिश्चितम् ।
कृत्वा, तदधिकन्नैव सञ्चिनोत्यपरिग्रही ॥

१—नाऽऽदत्ते—न क्रीणातीत्यर्थं ।

-१६-

इत्थं सामाजिकस्याऽत्र जीवनस्य व्यवस्थितौ ।
अणुव्रतानां साहाय्यं विद्यते सर्वतोऽधिकम् ॥

-१७-

महावीर-प्रभु-प्रत्ते ह्यणुव्रत - प्रकल्पने ।
न वर्णभेदो नो वाऽऽस्ते उच्च-नीचत्व-भावना ॥

-१८-

जाति-वंश-विशेषाऽऽप्त — जन्म-हेतोर्न कश्चन ।
पारस्परिकरूपेण कर्त्तुं तत्कर्म, बाध्यते ॥

-१९-

गुण-शिक्षा-विभेदेन तथाऽन्यद् व्रत-सप्तकम् ।
[1]क्रमशस्त्रि— चतुस्संख्यमणुव्रति— समीहितम् ॥

गुणव्रतानि शिक्षाव्रतानि च :—

-२०-

पालयन् द्वादशेमानि व्रतानि मनुजः शनैः ।
भवन्नात्मोन्मुखश्चेत्थ स्वोत्थानाऽध्वनि वर्धते ॥

---

१—त्रीणि गुणव्रतानि यथा :—
(क)-दिग्व्रतम्, २-देशव्रतम्, ३-अनर्थ दण्डव्रतञ्चेति ।
चत्वारि शिक्षाव्रतानि च यथा :—
(ख)-सामायिकप्रोषधोपवास-भोगोपभोग-परिमाणातिथि—
सम्विभागेत्याख्यानि ।

**निवृत्तिमूला प्रवृत्ति :—**

-२१-

सुमर्यादित-रूपेण धर्मार्थ-काम-नामकम् ।
पुरुषार्थ-त्रयं लब्ध्वा 'मोक्षं'-तुर्यं-प्रविन्दति ॥

-२२-

संक्षेप सेयं भूमिका श्रावकस्य तु ।
यां सुसम्पाद्य सः[1] क्षिप्रं साधु-श्रेणिं प्रगच्छति ॥

-२३-

कर्म-बन्ध-निरोधाय साध्नोति 'सम्वर' ह्यसौ ।
तथा सञ्चित-कर्मभ्यो-मुक्त्यै तीव्रं तपस्यति ॥

-२४-

स 'गुप्ति' 'समितो'-त्यादि-पालने निरतोऽनिशम् ।
महावीर इव प्रोग्रं श्रयते साधकस्तपः ॥

-२५-

तपोबलाद्-"आस्रवाणा" 'बन्धाना' भवति क्षतिः ।
'निर्जरा' जायते चाऽस्य पूर्व-सञ्चित-कर्मणाम् ॥

-२६-

इत्थं स 'आत्मतः' प्राप्तुं 'परमात्मत्व'-मत्र वै ।
प्रवर्धते साधकश्च प्रक्षीण-कर्म-बन्धनः ॥

---

१—स श्रावक ।

-२७-

एवमात्म गुणानां नु विकास–क्रमगं विधिम् ।
'गुणस्थाना'–ऽभिधं प्राहु-श्चतुर्दशेति-संख्यितम् ॥

-२८-

चतुर्दशतमं प्राप्य गुणस्थानं सुसाधकः ।
परमात्म–स्वरूपञ्च सम्पूर्णमधिगच्छति ॥

-२९-

सैषोपलब्धिः परमा साधक भुवि स्मृता ।
यतोऽनन्त गुणं-शुद्ध-स्वरूपं सोऽधिगच्छति ॥

इति श्री आचार्य–मधुकरशास्त्रि–विरचिते
श्रीमहावीर-सौरभे पञ्चदशः सर्गः समाप्तः ।



# श्री हा ीर सौरभम्

—: षोडशः ः :—

[ उपदेशपरम्परा – ३ ]

जैन–धर्म–परम्परा :—

–१–

महावीरात् परं जैना अक्षुण्ण–मूल–भित्तिकाः ।
सन्तोऽपि द्विविधा जाता साधवश्श्रावका अपि ।।

–२–

ख्याता 'दिगम्बरा'—स्तेऽत्र
'श्वेताम्बरा' स्तथा भुवि ।
मान्यता — भेदवशतः
सिद्धान्त–भिन्नता दृशा ।।

१ दिगम्बरसाधु :—

–३–

'दिगम्बरः सदा नग्नः धृत—काष्ठकमण्डलुः ।
मयूरबर्ह—रचित—मार्जनी—मात्र—धारकः ।।

-८-

भगवन्तं　महावीरं　जैनास्तदनुयायिनः ।
त्रयोविंशति संख्यांश्च पूजयन्ति तीर्थङ्करान् ॥

-९-

इमे　प्रायस्समग्रस्य　भारतस्याञ्चलेष्विह ।
विदेशेष्वपि चेदानीं प्राप्यन्ते विपुलाः खलु ॥

'तेरापन्थो' 'बीसपन्थो'-प्रभेद :—

-१०

मूर्ति-पूजा कथ कार्या ? इत्यत्र मतभेदतः ।
'तेरापन्थो' 'बीसपन्थो' इति द्वैतमभूत् ततः ॥

'तारणपन्थ'-इति नामकः प्रभेद :—

-११-

'तारणतरण—स्वामी'—त्याख्यः
साधुवरस्स्थापयामास ।
तारणपन्थेत्यभिध　'षोडश -
शतके　नूतममतम् ॥

१—तारणतरण स्वामिनो जन्म १५१५ मिते ईशवीये वर्षे गवालियरेति प्रस्थान-राज्यान्तर्गते 'मल्हारगढ' इति नामके स्थाने समभूत् ।

-१२-

मूर्ति-पूजा-विरोध्येतन्मतं; चैत्यालये स्थित - ।
शास्त्राण्येवार्चति; द्रव्याऽर्पणं नो चाऽनुमोदते ।।

-१३-

मध्यप्रदेशे भारतीये,—चैतन्मतानुयायिनः ।
प्रायस्समुपलभ्यन्ते दिगम्बर—प्रभेदतः ।।

२ श्वेताम्बर :—

-१४-

सितवासोधरस्साधुः 'श्वेताम्बर'-इति स्मृतः ।
चतुर्दशोपकरणान्यसौ रक्षति सर्वदा ।।

तानि चतुर्दशोपकरणानि यथा :—

-१५-

-१७-

'चोलपट्टक'-मन्त्यश्चे-त्येतानि तु चतुर्दश ।
श्वेताम्बरस्साधुवर्य्यः स्व-समीपे सुरक्षति ॥

-१८-

श्वेताम्बरसम्प्रदाय: प्रतिमा-पूजक: स्मृत: ।
एषा मूर्तिषु कौपीन-चिह्नं भवति चाङ्कितम् ।

एतद्भेद-भूत: 'स्थानकवासी' 'तेरापन्थी' च :-

-१९-

मूर्तिपूजा विरोधेऽस्य भेद - द्वयमजायत ।
सम्प्रदायस्य. यन्नूनमधो निर्दिष्ट-नामकम् ॥

स्थानकवासी :-

-२०-

आद्य: 'स्थानकवासी'-ति-तेरापन्थी द्वितीयक: ।
षोडशे शतके 'लोकाशाहे'-[1]नाऽऽद्य प्रवर्तित: ॥

-२१-

आदौ 'लोकागच्छ' नाम्ना
प्राप्त: ख्याति ततस्त्वसौ ।
सम्प्रदाय: प्रसिद्धोऽभूत् -
'स्थानकवासि'—संज्ञया ॥

१ -'लोकाशाह'-इति नामा महात्मा १५३१ तमे विक्रमसम्वत्सरे 'स्थानकवासि'-सम्प्रदाय स्थापयाम्बभूवेत्याशय. ।

-२७-

सोऽस्यैव सम्प्रदायस्य चाऽऽचार्यो नवमः स्मृतः ।
मुनिश्रीनगराजादि 'नथमला'ऽऽदि नामकाः ।।

-२८-

सन्त्यस्य सम्प्रदायस्य विशिष्टा मुनि-पण्डिताः ।
समस्ते भारते वर्षे जैने जगति विश्रुताः ।।

-२९-

एक एव भवत्यस्य सम्प्रदायस्य सुव्रतः ।
आचार्यश्चाऽप्यधिष्ठाता योऽनुशास्ति सदा दृढम् ।।

-३०-

'अर्धस्फालक' 'यापनीय' 'कूर्चके'-त्यादि नामकाः ।
श्रूयन्तेऽन्ये सम्प्रदायाः किन्तु ते नामशेषकाः ।।

-३१-

इतीत्थं जैन-धर्मस्य सम्प्रदाय-निरूपणम् ।
संक्षेपेण कृतं, भूयाद् विद्वज्जन-मनोमुदे ।।

मूलाऽऽचार-व्यवहारयोस्साम्यम् :—

-३२-

अहिंसामूलकाऽऽचार-वशाज्जनास्ससेप्य[1] हो ।
प्रत्येकस्मिन् कार्य-जाते 'ह्यहिंसा'-पालन-व्रताः ।।

---

१— समोऽत्र सर्व-पर्याय ।

-३८-

द्वे जैन-पर्वणी मुख्ये मन्येते -सौख्यदे ।
आद्यं 'पर्युषणं' प्रोक्तं, 'दीपावलि'-रथाऽपरा ॥

(क) पर्युषण- :—

-३९-

सर्वं-मुख्यमिदं मन्यतेऽष्ट-दिनावधि ।
एवाऽष्टाह्निकेति नाम्नैतत् प्रोच्यते खलु ॥

-४०-

दिगम्बरैर्दशाऽहानि यावत् पर्वैतदुत्तमम् ।
मन्यतेऽतश्च तद्दृष्ट्या पर्वेदं ' लक्षणम्' ॥

-४१-

भाद्रमासे सिते पक्षे ह्यष्टौ दिनानि वा ।
पर्वेदं समहोत्साहं जैनैरायोज्यते : ॥

-४२-

तदेतत् साधना-पर्व धर्मानुष्ठान-धारकम् ।
-श्रावक-साधूनामात्मालोचन-पावनम् ॥

-४३-

पर्वान्ते तु क्षमा-याञ्चा-दिवसः सत्प्रकीर्तितः ।
यो मिथः स्नेह-सद्भाव-भ्रातृत्वोद्भावना- : ॥

दीपावलि :—

-४४-

पूर्वं तदेतदुक्तं यन्महावीर — प्रभोर्ननु ।
परिनिर्वाणोपलक्ष्ये दीपावलिरमान्यत ॥

-४५-

ततः प्रभृति पर्वेदं दीपावलीति नामकम् ।
ज्योतिर्मयं सप्रमोदं मान्यते जैन-धार्मिकैः ॥

अन्यानि पर्वाणि :—

-४६-

"महावीर जयन्त्यादि पर्वाण्यपि महान्ति यैः ।
यान्यत्र ससमारोहं मान्यन्ते जैन-तल्लजैः" ॥

युग-सन्दर्भे भगवतो महावीरस्य चिन्तनम् :—

-४७-

महावीरस्य सन्देशो गुञ्जत्यद्यापि भूतले ।
नूतनं युग-निर्माणं विदधत् विश्वप्रबोधकम् ॥

-४८-

स जीवनं जीवन-पद्धतिञ्च
व्यक्तेर्विकासस्य च भव्य-मार्गम् ।
धर्मस्य कल्याण-निगूढ-तत्त्वं,
प्राकाशयन्मानवता-रहस्यम् ॥

-४९-

दुराग्रह-ग्रस्त-जगन्निमित्तं
प्रादादनेकान्त-विचार-रूपाम् ।
सुधामथाऽऽचार-सुधारणार्थं—
मणुव्रत-ज्योतिरदर्शयत्सः ॥

-५०-

समाज-सङ्घर्ष-विनाश-हेतोः
'स्याद्वाद'-भाषामदिशत् प्रभुस्सः ।
भुवि प्रजा-तान्त्रिक पद्धतीनां
मूल 'त्वनेकान्त'-सुचिन्तनं वै ॥

-५१-

"आचारः प्रथमो धर्म"-इति शास्त्र-समीहिते ।
सिद्धान्ते जैनधर्मोऽयं कुरुते प्रत्ययं दृढम् ॥

-५२-

यत आचार-हीनो ना सद्विचाररतोऽपि सन् ।
ससारे नैव लभते कल्याणं क्वाऽपि कर्हिचित् ॥

-५३-

भव्यं राष्ट्रं ह्यद्य नो भारताऽऽख्यं
त्रस्तं भ्रष्टाचार-रूपाद् भुजङ्गात् ।
नूनं प्राप्स्यत्युज्ज्वलादर्शमाशु
वीर-प्रत्तैर्विष्टपेऽणुव्रतैश्च ॥

-५४-

वर्तमान युगेऽस्त्येषः पन्था लक्ष्य-प्रकाशकः ।
'तैरैवाऽयं दिव्य-देशः शिवं सौख्यमवाप्स्यति ॥

-५५-

मेनदेव;-मिथो द्वेष-वह्निदग्ध-हृदो जग - ।
ज्जना अपि महावीर-सन्देशात् सुखमाप्नुयुः ॥

-५६-

सत्यं महावीर-वचः प्रदीपो
विश्वान्धकार-प्रशमे समर्थः ।
तद्दर्शितं मार्गमुपेत्य लोकैः
सम्प्राप्यते मङ्गल मूल लक्ष्यम् ॥

-५७-

एकत्रिंशदुत्तरेऽब्दे द्विसहस्रतमे शुभे ।
वैक्रमे; भाद्रशुक्लैकादश्याञ्च गुरुवासरे — ॥

-५८-

राजस्थाने 'जयपुरा'दुत्तरस्यांदिशिस्थित — ।
'डाबडी'—सहिते ग्रामे प्राप्तो रामपुरे जनुः ॥

---

१ -तैरेव-भगवन्महावीरभक्तै रणुव्रतै रेवेत्यर्थः ।

-५९-

"राजस्थान प्राच्यविद्या-प्रतिष्ठान " सम्प्रति- ।
'कोटा'-कार्यालयाऽध्यक्ष-पदस्थः कनि-शेखरः ॥

-६०-

शास्त्री मधुकराचार्यो ग्रन्थमेत प्रणीतवान् ।
प्रार्थये,—जायतां सोऽयं सर्व—मङ्गल—कारकः ॥

इति श्री-आचार्य—मधुकरशास्त्रि—विरचिते
श्रीमहावीर-सौरभाऽऽख्ये महाकाव्ये
षोडशः सर्गः समाप्तः ।



# परिशिष्टम्—१

## श्रमणवाणी [संस्कृतानुवादः]

१—धर्म-माहात्म्यम्—

धर्मो मङ्गलमुत्कृष्टं अहिंसा मस्तपः।
[1]देवा अपि तं नमस्यन्ति यस्य धर्मे मनः॥

—दशवैकालिक १/१

२—आत्मैव ह्यात्मनो मित्रम्—

[2]पुरुष! त्वमेत त्वन्मित्रम्
कि बहिर्मित्रमिच्छसि ?

—आचाराङ्गम्

३—अहिसा परमोधर्मः—

एवं खलु ज्ञानिनः सारः, यन्न हिनस्ति कश्चन
अहिसा-समयं चैव एतावन्तं विजानीयान्॥

—सूत्रकृताङ्गम् १/११/१०

---

१—त सुरा अपि वन्दन्ते।
२—नर ! त्वमेव त्वन्मित्रम्।

४— षां जीवनं प्रियम्—

सर्वे प्राणिनः प्रियायुष्काः सुखसार्थाः दुःखप्रतीकूलाः ।
अप्रियवधाः, प्रिय-जीवनाः, जीवितुकामाः, सर्वेषां जीवितं प्रियम् ॥
—आचाराङ्गम् २/३/८१

५—मा हिंस्यात् सर्वाभूतानि—

प्राणिनो यः स्वयं हन्ति, अन्यैर्वा घातयत्यपि ।
हनन्त वाऽनुजानाति, स्व-वैरं वर्द्धयत्यसौ ॥
—सूत्रकृताङ्गम् १/१/१/३

६—चत्वारि परमाङ्गानि—

चत्वारि परमाङ्गानि, दुर्लभानीह जन्तुनः ।
मनुष्यत्वं श्रुतिः श्रद्धा, सयमो वीर्यमप्यथो ॥
—उत्तराध्ययनम् ३/१

७—आत्म-विजय-माहात्म्यम्—

यः सहस्रं सहस्राणां सङ्ग्रामे दुर्ज्जये जयेत् ।
एक जयेच्चेदात्मानंएषोऽस्य परमो जयः ॥
—उत्तराध्ययनम् ९/३४

८—आत्म-जयादेव सुखोपलब्धिः—

आत्मनैव हि युध्यस्व, किन्ते युद्धेन बाह्यतः ।
आत्मनैवाऽत्र चाऽऽत्मानं, विजित्य सुखमेधते ॥

९—आत्मा मित्रमात्मैव च शत्रुः—

आत्मा कर्त्ता च भोक्ता च स्वकीय-सुख-दुःखयोः।
आत्मा मित्रश्च शत्रुश्च दुष्पथे सुपथे स्थितः॥
—उत्तराध्ययनम् २०/३७

१०—ब्रह्मचारि-श्रेष्ठत्वम्—

दमनीयोऽस्त आत्मैव, आत्मा तु खलु दुर्दमः।
सुखी भवत्यात्म-दान्तः अस्मिन् लोके परत्र च॥
—उत्तराध्ययनम् १/१५

११—ब्रह्मचर्य-महिमा—

देव-दानव-गन्धर्वा यक्ष-राक्षस-किन्नराः।
ब्रह्मचारिणं वन्दन्ते ते कुर्वन्ति च दुष्करम्॥
—उत्तराध्ययनम् १६/१६

१२—धर्मसरसि ब्रह्मचर्य तीर्थे स्नातवतां पूतमनस्कत्वम्—

(क) धर्मः सरोऽस्ति सत्तीर्थं ब्रह्मचर्यम्; -अनाविले—
यस्मिन्नात्मरूप-घाटे स्नातः सुविमलः शुचिः।
सुशान्तभूतोऽहं दोषान् समस्तान् प्रजहाम्यहो! ॥
—उत्तराध्ययनम् १२/४६

(ख) सुस्नानमेतत् कुशलैः प्रदिष्टं, ख्यातं महास्नानमिदं ऋषीणाम्।
स्नात्वा यतःपूतहृदोऽमलाश्च, महर्षयः प्रोच्चपदं प्रयाताः॥
—उत्तराध्ययनम् १२/७

१३— ˊ-महिमा

प्रज्ञा समीक्षते धर्म्मं

तत्त्वं, तत्त्व-विनिश्चयम् ॥

—उत्तराध्ययनम् २३/१५

१४—आत्म-प्राशस्त्यम्

आत्मा नदी वैतरणी, आत्मा वै कूट—शाल्मली ।

आत्मा कामदुधा धेनुः, आत्मा वै नन्दनं वनम् ॥

—उत्तराध्ययनम् २०/३६

१५—ब्राह्मण-लक्षणम्—

क्रोधाद्वा यदि वा मोहाद्, लोभाद्वा यदि वा भयात् ।

मृषा यस्तु न वदति, ब्रूमस्तं ब्राह्मणं वयम् ॥

—उत्तराध्ययनम् २५/२३/२४

१६—ब्राह्मण-स्वरूपवर्णनम्

जातरूपं यथा सृष्टं, निर्धूत मल पावकम् ।

राग-द्वेष-भयातीतं, ब्रूमस्तं ब्राह्मणं वयम् ॥

—उत्तराध्ययनम् २५/२०/२१

१७—कर्मणा वर्ण-निर्माणम्—

कर्मणा जायते विप्रः, क्षत्रियोऽपि च कर्मणा ।

कर्मणा जायते वैश्यः, शूद्रो भवति कर्मणा ॥

—उत्तराध्ययनम् २५/३३

१८—मृषावाद-विगर्हणम्—

मृषावादस्तु लोकेऽस्मिन्, सर्वं साधु-विगर्हितः ।
अविश्वासस्य हेतुस्सः तस्मान्मृषा विवर्जयेत् ॥

—दशवै० ६/१३

१९—सर्व-भूतेषु मैत्री स्यात्—

मैत्री मे सर्व-भूतेषु, वैरं मे स्यान्न केनचित् ॥

—आवश्यक सूत्रम्

२०—आत्मनः प्रतिकूलानि परेषान्न समाचरेत्—

यदिच्छस्यात्महेतोस्त्वं, (तत्परार्थमपीच्छ हे!) ।
यच्च नेच्छस्यात्म-हेतोस्तत् परार्थमपीच्छ नो ॥
(तत्त्व न्वितीयज्जिनशासनीयम्)

—बृहत्कल्प०

२१—क्रोध-मानादिजयप्रकारः —

प्रशमेन जयेत् क्रोधं मानं मृदुतया जयेत् ।
मायमार्जवभावेन लोभं सन्तोषतो जयेत् ॥

—दशव० ६/४/५

२२—दुःख-मोहतृष्णादि-विनाश-प्रकारः—

दुःखं हतं यस्य न चास्ति मोहो, मोहो हतो यस्य न चास्ति तृष्णा ।
तृष्णा हता यस्य न चास्ति लोभो लोभो हतो यस्य न किञ्चनास्ति ॥

—उत्तरा० ३२/६

२३—अभोगिनो मुक्तिलाभः—

भोगेषु सज्जते भोगी, अभोगी नोपलिप्यते ।
भोगी भ्रमति संसारे, अभोगी विप्रमुच्यते ॥

—उत्तरा० २५/२१

२४—काम-भोगा अनर्थानां खनयः—

क्षणमात्रसौख्याः बहुकालदुःखा, प्रकाम-दुःखा अनिकामसौख्याः ।
संसार-मोक्षस्य विपक्ष भूताः, खनयोऽनर्थानां नु काम-भोगाः ॥
—उत्तरा० १४/१३

२५—गृहीत इव केशेषु मृत्युना धर्ममाचरेत्—

जरा न पीडयेद् यावद्, व्याधि र्विन्न वर्धते ।
यावदिन्द्रियः-हानिर्न, तावद् धर्मं समाचरेत् ॥
—दशवै० ८/३६

२६—क्रोध-मान-मायादि-दुष्प्रभावः—

क्रोधः प्रणाशयेत् प्रीतिं, मानो विनय-नाशनः ।
मित्राणि नाशयेन्माया, लोभः सर्व-विनाशनः ॥
—दशवै० ८/३८

२७—संयम-प्रवृत्तिः श्रेयसे—

एकतो विरतिं कुर्यात्, एकतश्च प्रवर्तनम् ।
असंयमान्निवृत्तिश्च संयमे च प्रवर्तनम् ॥
—उत्तरा० ३१/२

इत्याचार्य-श्रीमधुकरशास्त्रि-समनूदितं श्री श्रमणवाणी-
सङ्कलन सम्पूर्णम् ॥

# किञ्चिज्ज्ञातव्यं ध्यातव्यञ्च

१—भगवान् महावीर स्वामी—जैनानाश्चतुर्विंशतितमोऽन्तिमश्च तीर्थङ्करः।

२—तज्जन्मकालः—ख्रिस्तीयात् ५९९ तमवर्षात् प्राक्।

३—तज्जन्मस्थानम्—वैशाल्याः कुण्डग्राम ।

४—महावीरस्याऽन्यानि चत्वारि नामानिः—
१—वर्धमान. २—सन्मति ३—वीरः ४—अतिवीरश्चेति।

५—गृहत्यागकाले तदीयं वय.—त्रिंशद्वर्षीय आसीत् तदा स ।

६—दीपावलि-पर्वणो हेतु —तद्दिने भगवान् महावीरो मोक्ष प्राप।

७—केवलज्ञानं कथमाप्तवान् स — सार्धद्वादशवर्षीयाया घोरसाधनाया कठोरतपस्यायाश्चाऽनन्तरम्।

८—तन्निर्वाणस्थानम्—वर्तमानविहारप्रदेशस्थ 'पावापुर" नामकम्।

९—निर्वाणकाल.—ख्रिस्तीयात् ५२७ तमाद्वर्षात् पूर्वम्।

१०—तदीयो मुख्य उपदेश — 'अहिंसा परमो धर्म " इति।

११—निर्वाणकाले तदीय वय·—द्विसप्तति (७२) वत्सरसम्मितम्।

१२—वीरनिर्वाणसम्वत्सरप्रारम्भ —तन्मोक्षप्राप्ति-दिवसात् प्रभृति।

१३—तस्य भगवत पञ्चविंशतिशततम-निर्वाण-दिवस-महोत्सव — ख्रिस्तीये चतुस्सप्तत्युत्तरैकोनविंशतिशततमे ( १९७४ ई० ) वर्षे।

—

# शुद्धिपत्रम्

| पृष्ठ पंक्तिश्च | अशुद्धम् | शुद्धम् |
|---|---|---|
| २/२ | मावताया | मानवतायाम् |
| १५/१० | दयाऽऽद्र | दयाऽऽर्द्र |
| २६/१३ | प्नत्यय | प्रत्यय |
| ३१/२ | प्नहार | प्रहार |
| ३६/१२ | मौंन | मोन |
| ३७/१२ | वपरा | दर्पण |
| ४० — | पद्यक्रमाङ्कस्य ६४ इत्यस्यस्थाने ४६ इतिज्ञेयम् | |
| ४३/६ | कार्यंपु | कार्येषु |
| ४८/१० | प्रवज्या | प्रव्रज्या |
| ५५/१ | महात्म | महात्म — |
| ५५/१० | साघना | साधना |
| ६३/७ | विपद् | विपद् |
| ८७/८ | चो:कारश्च | चीत्कारश्च |
| ८६/२ | माक्नमरा | माक्रमण |
| ६२/१० | तूष्णी | तूर्ष्णी |
| ६३/२ | विनेव | विनैव |
| ६६/२ | ऽऽमन्वित | ऽऽमन्त्रित |
| १०८/७ | सञ्चित् | सम्मित्र |
| ११२/४ | स्वर्गरय | स्वर्गस्य |
| ११५/८ | प्राप्यनादथो | प्राप्नोदथो |
| ११६/४ | तीव्र अत्याचार. | तीव्रमत्याचार |
| ११८/८ | प्नणीतवान् | प्रणीतवान् |
| १२३/३ | आत्मोत्याननस्य | आत्मोत्थानस्य |
| १३२/१३ | प्नक्षीण | प्रक्षीण |
| १३५/२ | चलम् | जलम् |
| १३५/५-८ | पद्यसंख्याङ्कनमसमोहितम् | |
| १३६/५ | तेरापन्थीबीसपन्थीप्रमेद। | तेरापन्थीवीसपन्थीप्रमेद। |
| १३६/६ | वामी | स्वामी |
| १३७/३ | प्नदेशे | प्रदेशे |
| १३७/१२ | स्यथैव | स्तथैव |
| १३६/११ | एतास्मिन् | एतस्मिन् |
| १३६/१४ | प्रवरो 'भीखनजा' | प्रवरो 'भीखनजी' |
| १४०/६ | थर्मस्य | धर्मस्य |
| १४०/१२ | प्य'हो | व्यहो । |
| १४१/१ | नेर्त्थ | नेत्थ |
| १४२/१० | धर्मा नुष्ठान | धर्मानुष्ठान |
| १४३/६ | सभ्दर्भे | सन्दर्भे |
| १४३/१४ | तिमूढ | निगूढ |
| १४५/३ | नैनदेव | नैतदेव |
| १४५/३ | वह्नि | वह्नि |
| १४५/७ | माग | मार्ग |
| १४५/८ | मङ्गल मूल लक्ष्यम् | मङ्गलमूललक्ष्यम् |
| १४५/६ | एकत्रिंश | एकत्रिंश |
| १४६/२ | कनि— | कवि— |
| १४८/३ | सुखसार्था | सुखसार्था |
| १४८/७ | स्त्रवेर | स्ववैर |
| १४८/८ | सूत्रकृसाङ्गम्, | सूत्रकृताङ्गम् |
| १५२/२ | अविकामसौख्या | अनिकामसौख्याः |
| १५२/३ | ऽनर्थानां | ऽनर्थाना |
| १५२/७ | यावदिन्द्रिय. | यावदिन्द्रिय- |